# KASHMIR SERIES OF TEXTS AND STUDIES.

No. LXVI

## VAMAKESVARIMATAM

WITH THE COMMENTARY OF

RĀJĀNAKA JAYARATHA

KASHMIR SERIES OF TEXTS AND STUDIES.
No. LXVI.

THE

# VĀMAKEŚVARĪMATAM

With the Commentary of

RĀJĀNAKA JAYARATHA

EDITED BY

PANDIT MADHUSUDAN KAUL SHASTRI
SUPERINTENDENT RESEARCH
DEPARTMENT,
HIS HIGHNESS' GOVERNMENT,
JAMMU AND KASHMIR,
SRINAGAR.

Published under the Authority of the Government of
His Highness Rājarājeśvara Mahārājādhirāj
Śri MAHĀRAJĀ HARISINGHJI BAHĀDUR,
G.C.S.I., G.C.I.E., K.C.V.O., LL.D.
MAHĀRĀJA JAMMU & KASHMIR.



SRINAGAR.
Printed at the Mercantile Press
1945. A.D.

काश्मीरसंस्कृतग्रन्थावलिः ।
ग्रन्थाङ्कः ६६

# श्रीवामकेश्वरीमतम् ।

## श्रीमद्राजानकजयरथविरचितविवरणोपेतम् ।

श्रीराजराजेश्वर-महाराजाधिराज-कश्मीरनरेन्द्र-
श्रीहरिसिंहजी-बहादुराज्ञया
रिसर्च-कार्याध्यक्ष-पण्डित-मधुसूदनकौल-शास्त्रिणा
उद्दिष्टकार्यालयस्थेतरपण्डितसहायेन
संशोधनादिसंस्करणोत्तरं
संपाद्य
श्रीनगर 'मर्कण्टाइल' मुद्रणालये मुद्रापयित्वा
प्राकाश्यमुपनीतम् ।



संवत् २००१   कश्मीर-श्रीनगर   खैस्ताब्दः १९४५



श्रीसोमानन्दनाथप्रभृतिगुरुवरादिष्टसन्नीतिमार्गो

लब्ध्वा यत्रैव सम्यक्पटिमानि घटनामीश्वराद्वैतवादः ।

कश्मीरेभ्यः प्रसृत्य प्रकटपरिमलो रञ्जयन् सर्वदेशान्

देशेऽन्यस्मिन्नदृष्टो घुसृणविसरवत् सर्ववन्द्यत्वमाप ॥१॥

तरत तरसा संसाराब्धिं विधत्त परे पदे

पदमविचलं नित्यालोकप्रमोदसुनिर्भरे ।

विमृशत शिवादिष्टाद्वैतावबोधसुधारसं

प्रसभविलसत्सद्युक्त्याऽन्तः समुत्प्लवदायिनम् ॥ २ ॥

# VĀMAKEŚVARĪMATAM.

## PREFACE

In the following pages is presented the Vāmakesvarīmata with the brief commentary by Rājānaka Jayaratha. In editing the same the following Manuscripts only have been available for the construction of the text and the commentary :--

क. A country-paper Manuscript of the Research Department. Consists of 63 leaves with 19 lines per page, each line containing 23 letters. In the Sāradā script. Almost correct. Size $5\frac{1}{2}'' \times 7\frac{1}{2}''$.

ख. A transcript belonging to the Department. Consists of 109 leaves foolscap size, with 26 lines per page, each line having 16 letters on an average. Incorrect.

ग. A Manuscript belonging to Pandit Hara Bhatta Sastrī of the Department. Has 32 leaves with 17 lines per page having 44 letters in each line. In the Sāradā script. Size $13\frac{1}{2}'' \times 7\frac{1}{2}''$. Almost incorrect. Date of copying of the Manuscript is Samvat 61, Chaitra Sudi, Aṣṭamī.

# INTRODUCTION.

The text of the Āgamic nature here given and commented upon is from the Vāmakeśvara Tantra. It is completed in eight sections called Patalas, of which the first five deal with the outer aspect of the worship of the goddess Tripurasundarī. The last three treating of the inner side of the same are collectively called Yoginīhṛdaya. In the portion of the Tantra named above the Yoginīhṛdaya has been left out by the commentator, perhaps because it was commented upon in a satisfactory manner by the competent authority called Amṛtānandanātha whom he mentions in the beginning of his commentary with due respect.

The object of Jayaratha in undertaking the present commentary is not the elucidation of the textual matter as much as offering the destructive criticism of glosses and commentaries existing in his day on the work referred to above.

As, in his day and for many centuries before, the cult of Tripurasundarī was gaining popularity, numerous writers seem to have tried their pen in exposing the text of the Vāmakeśvara Tantra. Among those whom Jayaratha criticises, one only is referred to by name i. e. Allaṭa Whether this Allaṭa is the same as or different from the author of the Kāvyaprakāsa is not known.

The chief target of his criticism is the commentator who has studied and quoted from the Vārtika and the Rasamahodadhi, two elaborate works on the worship of the goddess Tripurā, and whose spiritual teacher is named as Charyānandanātha.

He says that the secret lore, as detailed in the Rasamahodadhi, regarding the above was directly introduced into Kashmir by the mystic teacher Iśvaraśiva and Viśvāvarta the compiler of the Utpalastotrāvali made it his mission to promulgate the same. It is also said by him that there have been two schools only proficient in the said lore, headed respectively by Isvarasiva and Sañkararāsi though Kalyāṇavarma was also sometimes being heard of. Isvarasiva is referred to as having been the abbot of Sūramaṭha founded by Sūra a minister of Avantivarman, 9th century A.D. near Supayan.

The comentator criticised seems to have flourished after Abhinavagupta, as the former is said to be quoting the latter. Almost nothing is known of Buppā-rāhula author of the work 'Mantrasañketa' referred to by Jayaratha in the commentary.

JAYARATHA. He is known already to us as the author of the Tantrāloka-viveka at the end of which he says that he was the son of Sṛṇgāraratha, a minister of Jayasimha, King of Kashmir in the early part of the twelfth century A.D.

| पार्श्वे | पङ्क्तौ | शुद्धम | अशुद्धम् |
|---|---|---|---|
| ४ | २१ | अर्थस्य | र्थस्य |
| ४ | २२ | स्तस्य | अस्तस्य |
| ६ | २१ | तैर्याः | तेर्याः |
| ११ | २४ | उत्कृष्टाकारां | उत्कृष्टाधारां |
| ११ | २५ | धिशायितया | शिधयितया |
| १६ | १३ | चतुष्टयमत्र | चतुष्टमयत्र |
| ३० | २ | संनिवेशः | संन्निवेशः |
| ३० | ७ | मस्येव | मस्तैव |
| ३५ | २० | भ्रमतो | अभ्रमतो |
| ३५ | २४ | प्रथमसूत्रस्य | प्रथसूत्रस्य |
| ३८ | १८ | वस्त्वष्टि | वस्वदष्टि |
| ४६ | २३ | युक्त्वा | युंक्त्वा |
| ४८ | ६ | मतेन पर्यैव | मतेन न पर्यैव |
| ४८ | १० | कृतं न विघ्नः | कृतम् । न विघ्नः |
| ४८ | १२ | ततश्च | तनश्च |
| ५० | ८ | अग्न्याहिता | अग्न्वाहिता |
| ५१ | ८ | युक्त्वा | युङ्क्त्वा |
| ५१ | १४ | युक्त्वेति | युङ्क्त्वेति |
| ५२ | २१ | तुशब्दो | तुसब्दो |
| ५३ | १६ | नास्ति | नान्ति |
| ६३ | ६ | आवाहनौचित्यात् | आवाहनानौचित्यात् |
| ६८ | २१ | त्रिपुराश्रीः | त्रिपुरा श्रीः |
| ६८ | २५ | त्रिपुराश्रीश्च | त्रिपुरा श्रीश्च |
| ७० | ३ | त्रिपुरासिद्धिः | त्रिपुरा सिद्धिः |
| ७० | ७ | त्रिपुरासिद्धिः | त्रिपुरा सिद्धिः |
| ७३ | २१ | रसनायके | रसनायिके |
| ७८ | २ | दीपा | द्वीपा |

| पार्श्वे | पङ्क्तौ | शुद्धम् | अशुद्धम् |
|---|---|---|---|
| ७९ | १३ | लेखने | लिखने |
| ८० | १६ | सद्य आकर्ष | सद्यः आकर्ष |
| ८१ | १३ | रनन्तरं | रन्तरं |
| १०४ | ८ | ऐन्दवी | बैन्दवी |
| १०५ | २ | देवीति | दैवीति |
| १०५ | ५ | तीत्यर्थः | तीर्त्यथः |
| १०६ | २० | अकुल | अलुक |
| ११८ | २१ | हृदन्तं | हदन्तं |
| ११९ | ७ | गणैः | गणः |
| १३१ | २० | विनिर्मितः | विनिर्मीतः |

श्रीवामकेश्वरीमते प्रमाणत्वेनोद्धृतग्रन्थनामानि ।



१ स्वच्छन्दतन्त्रम्
२ मालिनीविजयतन्त्रम्
३ ईश्वरप्रत्यभिज्ञा
४ तन्त्रालोकः
५ उत्पलस्तोत्रावली
६ बृहदारण्यकोपनिषत्
७ वाक्यपदी
८ वार्तिककारः
९ आगमः
१० श्रीयोगसञ्चारः
११ श्रीरसमहोदधिः
१२ श्रीनित्याकुलतन्त्रम्
१३ आनन्देश्वरकल्पः
१४ योगिनीहृदयम्
१५ रसस्वच्छन्दतन्त्रम्
१६ प्रत्यभिज्ञाहृदयम्

'त्रिपुरा परमा शक्तिराद्या [1]जातादितः प्रिये ।
स्थूलसूक्ष्मवि[2]भागेन त्रैलोक्योत्पत्तिमातृका ॥' (४।४)

इत्यादिना वक्ष्यमाणस्वरूपाम्, गुरुभिरपि

'चितिः प्रत्यवमर्शात्मा परा वाक् स्वरसोदिता ।
स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः ॥
सा स्फुरत्ता महासत्ता देशकालाविशेषिणी ।
सैषा सारतया प्रोक्ता हृदयं परमेष्ठिनः ॥' (ई०प्र०१।५।१०)

इत्यादिना निरूपितां पराहंपरामर्शसारां परां परमेश्वरीं वाच्यवाचकात्मनो विश्वस्य जननीं स्वातन्त्र्यात्मिकां शक्तिम्,

'..................एकाकी न रमाम्यहम् ।'

इतिवचनात्

'आस्थास्यदेकरूपेण वपुषा चेन्महेश्वरः ।
महेश्वरत्वं संवित्त्वं तदत्यक्ष्यद्घटादिवत् ' (तं०३।१००)

इत्याद्युक्तयुक्त्या च बहिरुल्लिलासयिषया उन्मिषन्तीं श्रीमन्नरवाहनदत्तसूत्रितया

'अकचटतपयशगणेशग्रहाधीशनक्षत्रराशीश्वरीयोगिनीवाच्यगर्भा '

इत्यादिभङ्ग्या गणा अष्टौ वर्गाः,

'अर्कारजीवबुधशुक्रशनैश्चराद्या
वर्गाः क्रमेण कथिता ग्रहषट्कयुक्ताः ।
इन्दोर्मुखस्य च सितासितपक्षयोगाद्
ह्लादोपतापजनकौ कथितौ यशौ तु ॥'

इत्याद्युक्त्या तदीशा ग्रहाः

'द्वादशमण्डलभगणस्तत्रार्धे सिंहतो रविर्नाथः ।
कर्कटतः प्रतिलोमाच्छशी तथान्येऽपि तद्वानात् ॥'

---

१ 'ज्ञानोदिताः' ग. पाठः । २ 'विभेदेन' ग. पाठः ।

इत्युक्तेः, पारम्पर्येण साक्षाच्च तदधिष्ठानं नक्षत्राणि, योगिन्यस्तत्तद्ग्रहादियोगभाक्त्वात् प्रतिपदाद्यास्तिथय आवृत्त्या तदवलम्बनेन उदीयमाना ब्राह्म्याद्या अपि, राशयो मेषाद्याश्च; तद्रूपिणीं

'कालः सूर्यादिसंचारः·············· ।' (ई०प्र० २।१।३)

इति महागुरूदितलक्षणकालरूपतया प्रस्फुरन्तीमित्यर्थः । न केवलमेवं यावद्देशरूपतयापि प्रस्फुरतीत्याह–पीठरूपिणीमिति । पीठशब्देन

'पीठस्तु मातृका प्रोक्ता ·················· ।'

इति सकलजगदाधारमात्रवाचित्वेऽपि अत्र तदविनाभावित्वात् देश आक्षिप्यते इति देशरूपतयापि अवभासमानामित्यर्थः । अयमत्र आशयः–परैव हि संवित् स्वातन्त्र्यात् प्रथमं विश्वमवबिभासयिषुः

'मूर्तिवैचित्र्यतो देशक्रममाभासयत्यसौ ।
क्रियावैचित्र्यनिर्भासात् कालक्रममपीश्वरः ॥' (ई०प्र०२।१।५)

इतिदिशा[1] मूर्तिवैचित्र्यावभासनेन परसूक्ष्मस्थूलतया कलातत्त्वभुवनात्मना स्फुरन्ती देशाध्वानमवभासयति, क्रियावैचित्र्यनिर्भासनेन अपि वर्णमन्त्रपदात्मना कालाध्वानमपीति षड्विधाध्वमयनिखिलविश्वरूपतया स्फुरतीति । यदाहुः

'तत्र क्रियाभासनं यत्सोऽध्वा कालाख्य उच्यते ।
वर्णमन्त्रपदाभिख्यमत्रास्त्यध्वत्रयं स्फुटम् ॥
यस्तु मूर्त्यवभासांशः स देशाध्वा निरूप्यते ।
कलातत्त्वपुराभिख्यमन्तर्भूतमिह त्रयम् ॥
त्रिकद्वयेऽत्र प्रत्येकं स्थूलं सूक्ष्मं परं वपुः ।
यतोऽस्ति तेन सर्वोऽयमध्वा षड्विध उच्यते ॥'(तं०६।३६)

---

१ 'दृशा' क. पाठः ।

इति । एतदधिष्ठातृत्वेन अपि इयमेव अवभासते इत्याह मन्त्रमयीमिति । मन्त्रशब्देन च अत्र सप्त अपि शिवादयः सकलान्ताः प्रमातार उपलक्ष्यन्ते इति निखिलरुद्रक्षेत्रज्ञादिमयतया अपि आभासमानामित्यर्थः । तदेवं प्रमातृप्रमेयादिक्षोभमयत्वेऽपि अप्रच्युतप्राच्यस्वरूपैव इयमिति उक्तं देवीमिति एवमपि परप्रमात्रेकरूपस्वप्रकाशपरसंविदात्मनैव द्योतमानां नौमि देहादिमितप्रमातृतागुणीभावेन चि[1]त्प्रमातृतया समाविशामीत्यर्थः । इह प्रकृतस्य अर्थस्य अविश्रान्ततायामुपक्षेप्यस्य अर्थस्य अभिधानमेव तावन्न न्याय्यं, तत्रापि अशब्दार्थं कष्टकल्पनाबलोपनीतमसङ्गतप्रायं च तदिति कष्टात्कष्टं यत् गणेशशब्दाख्याने गकारस्य तावत् तृतीयात्मकसंख्येयमात्राभिधायित्वे त्रित्वलक्षणसंख्याभिधानाभावात् न ऽयरार्थप्रत्यायकत्वम् । तत्रापि स्वामिपदेनैव गतार्थत्वात् व्यर्थमेतदुपादानम् । एक एवहि ऽयरलक्षणश्चक्रावयवः प्रतिपाद्यो वर्तते । स च एतावतैव सिद्ध इति किमेतदुपादानेन । यदागमः

'तत्रैकमष्टकं मध्ये द्विदशान्ते चतुर्दश ।
चतुर्दश दशद्वन्द्वमष्टावेकं महेश्वरि ॥'

इति । अथ स्वामिपदेन मध्यमात्रमुच्यते वर्णपदेन तु ऽयरमिति चेत्, न उभयथापि मध्याव्यतिरेकेणैव अस्यार्थस्य स्वयंसिद्धेः । नापि अक्षपातित्वेन एकतरदशारावगमग्रस्तस्य दिक्पातित्ववत् दशत्वलक्षणसंख्याभिधायित्वाभावात् ।

मन एव दशानामपि अक्षाणामेकः पतिः । यदागमः
'तत् त्रिधा तैजसात्तस्मान्मनोऽक्षेशमजायत ॥'(मा०वि०२।३१)

---

1 'त्प्रधान' क. पाठः ।

इति । 'बुद्धीन्द्रियगणपतिता मनसः' इत्यपि भवतैव उक्तम् । गणपतितिथिरपि संख्येयस्य अभिधायिकैव, नतु संख्याया इति न अस्या अपि चतुर्दशारवाचकत्वमिति उक्तप्रायम् । 'गणयोरीशार्णतया' इत्यनेनापि षोडशारद्वयमुच्यते । नच अत्र एतत् विवक्षितमेकस्यैव षोडशारस्य इष्टेः । गणेशशब्दश्च केन व्यापारेण एनमर्थमभिधत्ते इति तावत् बहुवक्तव्यत्वादास्तां, तत्रापि संख्येयमेव अवगमयति, न संख्यामिति पुनरपि प्रकृतार्थानुपपत्तिरेवेति न साक्षात् निखिलचक्रावयवप्रतिपादनं सिद्ध्येत् । किंच गणेशा अष्टौ, ग्रहाश्च अष्टौ, नक्षत्राणि च सप्तविंशतिः । कथं नवचक्रकलाः

'अणिमा लघिमा महिमेशित्ववशित्वे प्रकामता भुक्तिः ।
इच्छामोक्षरसाश्चेह्योक्ताः सिद्धयस्तन्त्रे ॥'

इत्याद्युक्त्या दश सिद्धीर्मुद्राश्च विद्याश्च अष्टावभिधातुमुत्सहन्ते इति

'स्वामितया वर्णतया नन्द्यादितयाक्षादिकूपतित्वेन ।
गणपतितिथिरूपतया विद्येशतया क्रमाक्रमतः ॥
गणयोरीशार्णतया लोकेशतया तथाच नवचक्र्याम् ।
शशिगुणवसुदशदशमनुवसुपतिवसुवाग् गणेशपदम् ॥
चक्रकलासु गणेशाश्चक्रेषु च वाचका ग्रहा नवसु ।
नक्षत्राणि नवस्वपि सिद्धिषु मुद्रासु विद्यासु ॥'

इत्याद्युक्तमिवेति लोकमहत्तया संभाव्यमानानामेवमुच्यमानं सर्वेषां कर्णकटुकमिव प्रतिभासत इति स्थालीपुलाकन्यायेन इयदेव आस्ताम् । एवं गणेशादिगणनया त्रिचत्वारिंशत्कोणत्वादिव्याख्यानमर्धोच्छिष्टप्रायमेवेति किमनेनापि ग्रन्थवि[1]स्तरकारिणा प्रकृतानुपयोगिना पर्यालोचितेन । मर्मस्थानेषु

---

१ 'विस्तार' क. पाठः ।

पुनः प्रतिपदमेतन्मात्सर्यालोचनं सर्वथा कारिष्यतोऽन्यथा-प्रवृत्तिरेव दुष्यतीति अलमतिविस्तरेण ॥ १ ॥

एवं

'संसारैकनिमित्ताय संसारैकविरोधिने ।

नमः संसाररूपाय निःसंसाराय शम्भवे ॥'(उ० स्तो० १। ८)

इतिमहागुरूदितदृष्ट्या एवंविधषड्विधाध्वरूपं संसारमावि-र्भाव्य, पुनरपि स्वेच्छया तिरोभावयतीति अतिदुर्घटकारि-त्वमस्याः प्रदर्शयितुमाह

**प्रणमामि महादेवीं मातृकां परमेश्वरीम् ।**

**कालहल्लोहलोल्लोलकलनाशमकारिणीम् ॥ २ ॥**

'तस्याप्यूर्ध्वममेयस्तु कालः स्यात्परमावधिः ।

नित्यो नित्योदितो देवि अकल्यश्च न कल्यते ॥

स चाधः कलयेत्सर्वं व्यापिन्यादिं धरावधिम् ।

तुट्यादिभिः कलाभिश्च देव्यध्वानं चराचरम् ॥'(स्व० ११। ३११)

इत्यादिनिरूपितस्वरूपस्य कालस्य यो हल्लोहलः

'स कालः साम्यसंज्ञश्च............... ।' (स्व० ११। ३०६)

इत्युक्तप्रकर्षाप्रकर्षशून्यसाम्यात्मकाविभागस्वभावोऽवस्थावि-शेषस्तस्य उल्लोलाः

'अपरः षोडशो यावत्कालः सप्तदशः परः ।

परात्परस्तु यः कालः स प्रियेऽष्टादशः प्रभुः ॥'(स्व० ४। ३२६)

इत्याद्युक्तानि तुटिलवनिमेषाद्यात्मकानि विस्फूर्जितानि तेषां कलनास्तत्तदाभासभेदाहितक्रमाक्रमप्रायतया अवच्छेदास्ता-सां शमकारिणीं

'सर्वत्राभासभेदोऽपि भवेत्कालक्रमाकरः ।

विच्छिन्नभासः शून्यादेर्मातुर्भातस्य नो सकृत् ॥'(ई० प्र० २। १। ६)

इत्याद्युक्तयुक्त्या [१]परिमितशून्यादिप्रमातृताविलापनेन

'[२]सर्वो ममायं विभव इत्येवं परिजानतः ।
विश्वात्मनो विकल्पानां प्रसरेऽपि [३]विमुक्तता ॥' (ई०प्र०४।१।६)

इत्याद्यनुसन्धानभाजमनुग्राह्यजनमखण्डपरिपूर्णपरसंविदात्मनि अकालकलिते परे धाम्नि विश्रामयन्तीम्, अत एव महादेवीं महत्त्वेन अपरिच्छिन्नपरसंविदेकघनतया द्योतमानाम्, अत एव परमेश्वरीमतिदुर्घटकारिस्वातन्त्र्यशालिनीं मातृकां प्रणमामीति वाक्यार्थः ॥ २ ॥

न केवलमे[४]वं यावत्तत्तत्सिद्धिदानप्रवणा अपि इयमित्याविष्कर्तुमाह

यदक्षै[५]रकमात्रेऽपि संसिद्धे स्पर्धते नरः ।
रवितार्क्ष्येन्दुकन्दर्पशङ्करानलविष्णुभिः ॥ ३ ॥

यस्या वाग्भवादावेकस्मिन्नपि अक्षरमात्रे वक्ष्यमाणैकैकाक्षरसाधनप्रक्रियया संसिद्धे नरोऽपि रव्यादिभिः स्पर्धते तत्समान एव जायते इत्यर्थः । यद्वक्ष्यति

'ततो भवति [६]वै देवि वैनतेय इवापरः ॥' (४ । ४५)

इति,

'ततो भवति देवेशि सर्वश्रृङ्गारमानिनाम् ।
रागिणां साधको देवि बाधको मदनाधिकः ॥' (४ । ३८)

इति,

'दुष्टव्याधिग्रहानेकडाकिनीरूपिकागणैः ।
भूतप्रेतपिशा[७]चौघैस्त्रिनेत्र इव दृश्यते ॥' (४ । ५०)

इति,

---

१ 'परमित' क. पाठः । २ 'सोऽहं' पाठान्तरम् । ३ 'महेशता' ख. पाठान्तरम् । ४ 'तत यावत्' ख. पाठः । ५ 'मात्रेण' ख. पाठान्तरम् । ६ 'देवेशि' ग. पाठः । ७ 'चाद्यै' ग. पाठः ।

'......................दृश्यते साधकोत्तमः ।
सर्वयोगिनिवृन्दैस्तु ज्वलत्पावकसन्निभः ॥' (३।४६)

इति,

'एतामेव पुराराध्य विद्यां त्रैलोक्यमोहिनीम् ।
त्रैलोक्यमोहनं रूपमकार्षीद्भगवान्हरिः ॥' (४।६७)

इति च । अनलकन्दर्पयोरेव एवंवचनात् रवीन्द्वोरपि एतदर्थसिद्धमिति पृथक् न उक्तम् । बहुवचनादाद्यर्थोऽपि लभ्यते इति वाक्पत्यादेरपि ग्रहणम् । यद्वक्ष्यति

'सोऽपि संजायते वाग्मी वाचस्पतिरिवापरः ।' (४।२६)

इति । अत एवच अत्र वाक्पतित्वाभ्यूहनेन निर्निबन्धनमननुगुणत्वं न वाच्यं, किन्तु अक्षरमात्रसंसिद्धिफलप्रतिपादने प्रक्रान्तस्य काण्डकूष्माण्डन्यायेन चक्रत्रयसमाराधनफलाभिधानस्य कोऽवसर इति वाच्यं यतोऽत्र

'वैश्वानरो दशकलो दशकिरणशतान्वितो दिनेशानः ।
भुवनाह्लादकृदिन्दुर्दशजातिविषघ्नयो गरुडः ॥
मदनोऽपि दशावस्थो विद्यास्थानान्वितोऽपि वागीशः ।
दशदिक्स्वामी शम्भुर्दशधा शतरुद्रधृतदेहः ॥
विष्णुर्दशावतारो विविधमहाभूतसृष्टिकृद्वेधाः ।
कमलजवाक्पतियामलमनुक्तमप्यूहनीयमिह ॥
दशदशचतुर्दशाकृतिकलनाचक्रत्रयं समाराध्य ।
धामगुरुकारणतया त्रयं त्रयं सिद्धमेतदिह ॥
पिण्डत्रितयात्मैवहि देवी विश्वस्य योनितां प्राप्ता ।
तस्माद्योनीनामपि पिण्डगताः सिद्धयः प्रोक्ताः ॥'

इत्याद्युक्तस्य दशकलत्वादेः पिण्डत्रयात्मदेवीयोनिताप्राप्तेश्च असमञ्जसं हेतुत्वमिति सर्वमिदमालजालप्रायमिति किमुच्यते महात्मनाम् । नच रव्यादेः सप्तकस्यैव उपादाने तेजो-

बलादिगुणसप्तकं नियामकं भवितुमर्हति एवंविधानां गुणा-न्तराणामपि संभवेन अनैकान्तिकत्वात् । तत्रापि

'तेजो बलं प्रसादश्च रूपं ज्ञानं विशुद्धता ।
परार्थमुद्यमश्चेति सप्त सर्वोत्तमा गुणाः ॥'

इत्यत्र तथा प्राचुर्याभावादयौक्तिकत्वात् रव्यादिक्रमसमाश्र-यणसद्भावाच्च कृतकत्वमिव संभाव्यते इति आस्तामेतत् । यच्च अत्र अन्यैः

'कालहल्लोलसूत्रेण रवितार्क्ष्यादिसूत्रतः ।
एकाक्षरा त्र्यक्षरा च द्वे विद्ये सूचिते मया ॥'

इत्यादि जिष्णूकुर्वत् विश्वामित्रन्यायेन नवामेव वाच्यवा-चकमयीं सृष्टिं विधाय रव्यादिशब्दैः क्रमेण ककारहकारा-वेकारककारमकारा ईकारहकारककारा लकारो रेफ ईका-रश्चेत्याक्षिप्ता इति मुख्यमन्त्रसंकेतोऽपि अत्र कटाक्षित इति उक्तं, तत्र वयं निषेद्धुं विधातुं वा न प्रगल्भामहे इति किमभिदध्मः; यद्वा किममुष्मै तपस्विने रुष्यते यत् वार्ति-ककारेण अपि एवमेव प्रतिपदं मन्त्रोद्धारः कृत इति अल-मनालोच्यालोचनेन ॥ ३ ॥

न केवलं साधकविषयमेव इयमेवं कुरुते, यावत् चरा-चरात्मकं निखिलमपि जगदेतदनुप्राणितमेवेत्याह

यदक्षरशशिज्योत्स्नामण्डितं भुवनत्रयम् ।
वन्दे सर्वेश्वरीं देवीं महाश्रीसिद्धमातृकाम् ॥ ४ ॥

यच्छ्रुतिः

'अस्तमित आदित्ये याज्ञवल्क्य चन्द्रेऽस्तमिते किंज्योतिः पुरुषः, वाग्ज्योतिरिति होवाच सम्राट् ।' (बृ० उ० ४ । ३ । ५) इति । पूर्वाचार्या अपि

'सैषा संसारिणां संज्ञा बहिरन्तश्च वर्तते ।
यदुत्क्रान्तौ विसंज्ञोऽयं दृश्यते काष्ठकुड्यवत् ॥'(वा०प०१।१२८)
इति

'इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥'

इति च । एवमेवंविधां तां महत्या 'सकृद्विभातोऽयमात्मा' इतिदृशा विद्युदादिवत् विच्छिद्य विच्छिद्य भासमानत्वाभावादेकरसतया प्रवृत्तया अविरतेन रूपेण अवभासमानया संवित्स्फुरणलक्षणया श्रिया

'प्रमातरि पुराणे तु सर्वदाभातविग्रहे ।
किं प्रमाणं नवाभासः सर्वप्रमितिभागिनि ॥' (ई० २।३।१६)

इत्यादिनयेन अपूर्वार्थविषयप्रमाणागोचरत्वादादित एव स्वतःसिद्धां महात्रिपुरसुन्दर्यादिशब्दव्यपदेश्यां मातृकां परां शक्तिं

'प्रमाणान्यपि वस्तूनां जीवितं यानि तन्वते ।
तेषामपि परो जीवः स एव परमेश्वरः ॥'(तं० १।५५)

इत्याद्युक्तया सर्वेषां प्रमातृप्रमाणप्रमेयादीनामपि जीविता[1]धायित्वादीश्वरीम्, अत एव देवीं तत्तत्प्रमात्रादिरूपतया क्रीडनशीलां वन्दे समाविशामीत्यर्थः ॥ ४ ॥

इदं तावत् भुवनत्रयमस्याः परस्या एव शक्तेः सकाशादुद्भूतमनयैवच अनुप्राणितमिति स्थितम्, आश्रयोऽपि अस्य इयमवेति प्रतिपादयितुमाह

**यदक्षरमहासूत्रप्रोतमेतज्जगत्त्रयम् ।**
**ब्रह्माण्डादिकटाहान्तं वन्दे तां सिद्धमातृकाम् ॥ ५ ॥**

एतत् सर्वतोऽवभासमानं ब्रह्माण्डादिकटाहः शक्त्यण्डं,

---

१ 'तादायित्वात्' ख. पाठान्तरम् ।

तदन्तं चराचरात्मकं भवभवाभवाभवरूपं जगत्त्रयं यदक्षराण्येव महत् सर्वानुगमयोग्यं सूत्रं, तत्र प्रोतमनुस्यूतं तद्भित्तिसंलग्नतयैव अवतिष्ठते; तामादिसिद्धां मातृकां वन्दे इति वाक्यार्थः ॥ ५ ॥

'या सा तु मातृका देवि परतेजःसमन्विता ।
तया व्याप्तमिदं सर्वमाब्रह्मभुवनान्तकम् ॥'

इति

'एवं शब्दस्य निष्पत्तिः शब्दव्याप्तं चराचरम् ।'

इति प्रकारान्तरेण अपि एतदक्षरप्रोतत्वमेव जगतः प्रपञ्चयितुमाह

**यदेकादशमाधारबीजकोणत्रयोद्भवम् ।**
**ब्रह्माण्डादिकटाहान्तं जगदद्यापि दृश्यते ॥ ६ ॥**
**अकचादिटतोन्नद्धपयशाक्षरवर्गिणीम् ।**
**ज्येष्ठाङ्गबाहुहृत्पृष्ठकटिपादनिवासिनीम् ॥ ७ ॥**
**तामिकाराक्षरोद्धारसाराधारां परापराम् ।**
**प्रणमामि महादेवीं परमानन्दरूपिणीम् ॥ ८ ॥**

तां प्रक्रान्तां मातृकां भगवतीं महादेवीं महत्त्वेन समनन्तरोक्तनिरूपितेन चित्त्वेन द्योतमानां चिच्छक्तिप्रधानादिवर्णात्मिकां चितश्च 'आनन्दो ब्रह्मणो रूपम्' इतिश्रुतेरानन्दरूपतामन्तरेण चित्त्वमेव न स्यादित्याह आनन्दरूपिणीमानन्दशक्तिप्रधानद्वितीयवर्णस्वरूपाम्,–इत्येवं चिदानन्दयोर्लोलीभावेन सिसृक्षात्मकपरामर्शोदयादिच्छाशक्त्यात्मन इकाराक्षरस्य तृतीयबीजस्य उद्धारेण साराधारां सकलजगदुल्लासनशालितया उत्कृष्टाधाराम्, अत एव शक्तिदशाशिधयितय परापरां तद्रूपां परमत्यर्थं प्रणमामि । एवं

सृष्ट्युन्मुखत्वादेव यस्याः

'अनुत्तरानन्दचिती इच्छाशक्तौ नियोजिते ।

त्रिकोणमिति तत्प्राहुर्विसर्गामोदसुन्दरम् ॥' (तं० ३।६४)

इत्याद्युक्त्या तद्बीजत्रयसंघट्टादुदीयमानमेकादशं

'त्रिकोणं भग इत्युक्तं वियत्स्थं गुप्तमण्डलम् ।

इच्छाज्ञानक्रियाकोणम् .......................... ॥'

इत्युक्तेः, आधारो जन्माधार[1]स्तद्रूपमेकारात्म यद्बीजं तस्य यदिच्छाज्ञानक्रियात्मकं कोणत्रयं तत उद्भूतं धरादिशक्तिपर्यन्तं निखिलमिदं साधारणं जगदद्यापि सर्वकालं, नतु कदाचिदेव, दृश्यते विशेषानुपादानात् सर्वैरेव ताद्रूप्येण परामृश्यते इत्यर्थः । नहि अस्य जगतः स कश्चिदपि अंशोऽस्ति यस्य न एतच्छक्तित्रयानुगमः । नहि अचिकीर्षितमज्ञातमकार्यं वा किंचिदपि व्यवहारनिर्वहणनैपुण्यमुद्वोढुमुत्सहत इत्यत्र सर्वे एव लौकिकाः साक्षिणः । एवमेवच श्रीतन्त्रालोकाद्युक्तयुक्त्या आदिवर्णादेरेव उदितैरकचादिभिरष्टभिर्वर्गैस्तद्वत्तामुद्वहन्तीमित्यर्थः । ज्येष्ठाङ्गं शिरस्तेन शिखाललाटभ्रूमध्यात्मकमवयवत्रयमाक्षिप्यते, बाहुभ्यां स्वमूलगतः कण्ठः, हृच्छब्दस्य आवृत्त्या हृत्पृष्ठशब्देन नाभिः, कट्या च जन्माधारः । यत वार्तिककारः

'भ्रूमध्यभालचूला ज्येष्ठाङ्गं बाहुमूलगः कण्ठः ।

हृद्धृदयं तत्पृष्ठे यस्याः सा प्रोदिता नाभिः ॥

जन्मस्थानं च कटिन्यासक्रमतस्तथाष्टकः पादः ।'

इति ॥ ८ ॥

एवमियं देवैरपि विकल्पयितुं न शक्येति प्रतिपादयितुमाह

[1] 'धारतद्रूपं' ख. पाठः ।

अद्यापि यस्या जानन्ति न मनागपि देवताः ।
केयं कस्मात् क केनेति स्वरूपारूपभावनाम्[1] ॥ ९ ॥
वन्दे तामहमक्षय्यक्षकाराक्षररूपिणीम्[2] ।
देवीं कुलकलोल्लोलप्रोल्लसन्तीं परौलिजाम्[3] ॥ १० ॥

ब्रह्मेन्द्रोपेन्द्रप्रभृतयोऽपि देवता मनागीषदपि यस्याः स्वरूपहेतुविषयप्रयोजनाविषये का इयं कस्मात् क केनेतिविकल्पचतुष्टयेऽपि स्वरूपं सत्त्वमरूपमसत्त्वं तत्र भावनां कथमेतद्भवतीति तन्निष्ठं स्वव्यापारमद्यापि न जानन्ति तन्निश्चयं कर्तुमसमर्था इत्यर्थः । यत इयमहंरूपिणी

'प्रत्याहृताशेषविश्वानुत्तरे सा निलीयते ।
तदिदं विश्वमन्तःस्थं शक्तौ सानुत्तरे पदे ॥
तत्तस्यामिति यत्तत्त्यं विभुना संपुटीकृतिः ।
संवित्तौ भाति यद्विश्वं तत्रापि खलु संविदा ॥
तदेतत्त्रितयं द्वन्द्वयोगात्संघट्टतां गतम् ।
एकमेव परं रूपं भैरवस्याहमात्मकम् ॥' (तं० ३ । २०७)

इत्याद्युक्तयुक्त्या आद्यन्त्यार्णग्रहणेन प्रत्याहृताशेषवर्णत्वात् प्रत्याहारक्रमेण अहंपरामर्शमयी प्रमात्रेकरूपेति न केयमिति इदन्तापरामर्शनीयतां सहते इति कथमासां[4] सत्त्वासत्त्वाभ्यां तन्निश्चयः । ननु एवमपि एकोनपञ्चाशद्वर्णात्मना नियतमस्या रूपं सिद्धं, तत् ताद्रूप्येणैव नियतः परामर्शोऽस्त्विति चेत्; एतदपि भवितुं न अर्हति यदियमक्षय्यक्षकाराक्षररूपिणी कूटात्मनि निजे रूपेऽवतिष्ठमानत्वादक्षय्यं यत् क्षकाराक्षरं तद्रूपा अपीत्यर्थः । क्षकारोऽपिहि अनुत्तरवि-

१ 'सरूपा' ग. । २ 'मक्षय्यामकारा' ग. । ३ 'परां शिवाम्' ग. पाठः ।
४ 'देवतानां' ख. पाठान्तरम् ।

सर्गसारककारसकारप्रत्याहारात्मतया युगपदेव निखिलां मातृकामामृशतीति पुनरपि यथोक्तैकैकाक्षरत्वाद्यनेकरूपत्वात् नैयत्येन सत्त्वासत्त्वाभ्यां तन्निश्चयः कर्तुं न साध्यः । हेतुरपि अस्या न निश्चेतुं शक्यो यदियं परौलिजा परा पूर्णा या इयमोलिरोवाल्लिः सकलमानसव्यवहारोत्तीर्णमौन्मनसमविकल्पकज्ञानं तस्मात्

'......................आद्या जातादितः...... ।'(४।४)

इति वक्ष्यमाणदृशा आदिसिद्धात् शिवात् जातेति । सोऽपि अविकल्परूपत्वादविकल्पनीय एवेति उक्तप्रायम् । विषयोऽपि एवं यत्

'कुलं पदमनामाख्यं...................... '

इति कुलरूपायामव्यपदेश्यायां कलायां परस्यामेव संविदि उल्लोलं जलधिलहरीन्यायेन प्रोल्लसन्ती तत्रैव विश्रान्ता तदनतिरेकेणैव आ[1]भासमानेति पूर्वोक्त एव पन्थाः । एवं तत्तद्रूपावस्थानेऽपि न अस्या नियतं किंचित् प्रयोजनमस्तीति तन्निश्चयोऽपि को यत् देवी तत्तद्रूपतया क्रीडनशीलेत्यर्थः । यदागमः

'शिवे तद्वच्च कामोऽस्ति शक्तेरपि न कामिता ।
उत्पन्ना तु स्वभावेन शिवस्य परमेश्वरी ॥'

इति । एवमेवंविधां तां मातृकादिशब्दव्यपदेश्यां परां शक्तिं वन्दे समाविशामीत्यर्थः ॥ १० ॥

इदानीं पूजासङ्केतमपि उपक्षेप्तुमाह

**वर्गानुक्रमयोगेन यस्या[2] मात्रष्टकं स्थितम् ।**
**वन्दे तामष्टवर्गोत्थमहासिद्ध्यष्टकेश्वरीम् ॥ ११ ॥**

तां भगवतीं मातृकामर्थात् यत एव वर्गाष्टकवत् स्वां-

---

१ 'अवभासमाना' ख. । २ 'यस्यां' ग. पाठः ।

शरूपतयैव उत्थितं यदणिमादिलक्षणं महदपरिच्छिन्नं सिद्ध्यष्टकं, तस्य ईश्वरीं तद्दानैकप्रवणां वन्दे यस्या

'वर्गानुक्रमयोगेन देवताष्टकसंयुता ।' (१।६०)

इतिवक्ष्यमाणदृशा वर्गानुक्रममभिसंबध्य तत्तदणिमादिसिद्धिजननात् मातृणां वशिन्यादीनामष्टकं स्थितं स्वानतिरिक्तमपि अतिरिक्तमिव अन्तरङ्गपरिवारभूतं प्रथमबाह्यचक्रपूज्यतया अवभासितमित्यर्थः ॥ ११ ॥

अत्र तावत् सर्वचक्रपूज्यसिद्ध्यष्टकसाहचर्यात् वशिन्याद्यष्टकोपादानमात्रेणैव समग्रचक्रपूजाक्रमासूत्रणमुपक्रान्तम् , साम्प्रतं तु प्राधान्यात् मूलत्रिकोणपूजासङ्केतमपि उपक्षेप्तुमाह

कामपूर्णजकाराख्य[१]श्रीपीठान्तर्निवासिनीम् ।

चतुराज्ञाकोशभूतां नौमि श्रीत्रिपुरामहम् ॥ १२ ॥

'सर्वत्रात्र ह्यहंशब्दो बोधमात्रैकवाचकः ।' (तं० १।१३२)

इतिनीत्या सत्यपि देहादौ बोधैकघनपरमात्मस्वरूपः प्रोक्तवक्ष्यमाणलक्षणां श्रीत्रिपुरां मातृकाशब्दव्यपदिष्टामस्मद्दर्शनप्रख्योपाख्यां श्रीमहात्रिपुरसुन्दरीं पूर्वादिदिङ्गनिविष्टेषु चतुर्ष्वपि पीठेषु सातत्येन वर्तमानाया अपि अनुग्रहाज्ञायाः कालबलेन प्रम्लायन्त्यास्तत्तत्सिद्धयोगिन्यादिप्रमुखेन पुनःपुनरवतारणात् कोशभूतां गञ्जप्रायामाकरभुवमित्यर्थः । तदुक्तं

'ज्ञानभ्रंशावसाने तु संज्ञाभेदाद्वरानने ।

कराले तव सन्तानो भविष्यति तवाज्ञया ॥'

इति । अत एव कामरूपादौ सकलजगदनुजिघृक्षापरतया सततं संनिहितां नौमीति वाक्यार्थः । अनेन च अष्टम-

१ 'राख्य' ग. पाठः ।

नवमचक्रपूजासङ्केतोट्टङ्कनमपि कटाक्षितमिति उपरम्यते । यच्च अत्र अन्यैः प्रतिपदं कष्टकल्पनाबलोपनीतमशब्दार्थं व्याख्यातमपभाषितं च, तत्सर्वैरल्पश्रुतैरपि स्वयमेव अवगम्यते इति उपेक्षितमिति 'परमतमप्रतिषिद्धमनुमतमेव' इति न विद्वद्भिराशङ्कनीयं यत् तत् प्रतिपदमनूद्य दूष्यमाणं प्रकृतानुपयोगित्वात् ग्रन्थविस्तरमात्राधानफलमेवेति अस्माभिरस्थाने न अभिनिविष्टं, किंतु तद्विरुद्धाभिधानेनैव तत् दूषितं भवतीति मन्तव्यमिति अलमतिप्रसङ्गेन, प्रस्तुतमव अभिदध्मः ॥ १२ ॥

एवमस्य तन्त्रस्य स्तुतिपूर्वकत्वं संप्रकाश्य अवतरणिकामेव कर्तुमुपक्रमते 'श्रीदेव्युवाच' इति । किमुवाचेत्याकाङ्क्षायामाह

भगवन्सर्वमन्त्राश्च भवता मे प्रकाशिताः ।
तथाच
चतुष्षष्टिस्तु[1] तन्त्राणि मातृणामुत्तमानि तु[2] ॥ १३ ॥
महामाया शम्बरं च योगिनी जालशम्बरम् ।
तत्त्वशम्बरकं देवं[3] भैरवाष्टकमेवच ॥ १४ ॥
बहुरूपाष्टकं ज्ञानं[4] यामलाष्टकमेवच ।
चन्द्रज्ञानं वासुकिं च महासंमोहनं तथा ॥ १५ ॥
महोच्छुष्मं महादेव वाथुलं[5] च नयोत्तरम् ।
हृद्भेदं मातृभेदं[6] च गुह्यतन्त्रं च कामिकम् ॥ १६ ॥
कालपादं[7] कालसारं तथान्यत् कुब्जिकामतम् ।

---

१ 'श्च' ग. पाठः । २ 'च' ग. । ३ 'चैव' ग. । ४ 'चैव' ग. । ५ 'वातुलं वातुलोत्तरम्' ग. । ६ 'तन्त्रभेदं' ग. । ७ 'कलावादं कलासारं' ग. ।

[1]नैयोत्तरं च वीणाद्यं त्रोतुलं त्रोतुलोत्तरम् ॥१७॥
पञ्चामृतं रूपभेदं भूतोड्डामरमेवच ।
कुलसारं कुलोड्डीशं कुलचूडामणिं तथा ॥१८॥
सर्वज्ञानोत्तरं देव महापि[2]चुमतं तथा ।
महालक्ष्मीमतं देवं[3] सिद्धयोगीश्वरीमतम् ॥१९॥
कुरूपिकामतं देव रूपिकामतमेवच ।
सर्ववीरमतं देवं[4] विमलामतमेवच ॥ २० ॥
अरुणेशं मो[5]र्दनेशं विशुद्धेश्वरमेवच ।
एवमेतानि शास्त्राणि तथान्यान्यपि कोटिशः ॥२१॥
भवतोक्तानि मे देव सर्वज्ञानमयानि च ।

वीणाद्यमिति वीणाशिखोत्तरम् ॥

किन्तु एवं सर्वशास्त्रेभ्योऽपि अन्तर्भूता

विद्याः[6] षोडश देवेश सूचिता न प्रकाशिताः ॥२२॥

तस्मात्

इदानीं श्रोतुमिच्छामि तासां नामानि शङ्कर ।
एकैकं[7]चक्रपूजां च परिपूर्णां समन्ततः ॥ २३ ॥
अनेकदेवतानामममन्त्रमुद्रागणैः सह ।

अत्रैव प्रत्युत्तरयितुं श्रीभैरव उवाच । किमुवाचेत्याह

---

१ 'तन्त्रोत्तरं च वीणाख्यं त्रोतलं त्रोतलोत्तरम्' ग. । २ 'महाकाली' ग. । ३ 'चैव' ग. । ४ 'चैव विमलामतमुत्तमम्' पूर्वपश्चिमदक्षं च उत्तरं च निरुत्तरम् । तन्त्रं वैशेषिकं ज्ञानं वीरावलि तथापरम्' इति ग. पु० अधिकपाठः । ५ 'मोहिनीशं' ग. । ६ 'नित्याः' ग. । ७ 'एकैकं' ग. । 'कथयस्व प्रसादेन यदि तुष्टोऽसि मे प्रभो' इति ग. पु० अधिकपाठः ।

शृणु देवि महाज्ञानं विद्याषोडशकार्णवम्[1] ॥ २४ ॥
न कस्यचिन्मयाख्यातं सर्वतन्त्रेषु गोपितम् ।

दुरवगाहत्वाच्च अत्र अर्णवेन निरूपणम् ॥

तदेव आह

तत्रादौ प्रथमा नित्या महात्रिपुरसुन्दरी ॥ २५ ॥
ततः कामेश्वरी नित्या नित्या च भगमालिनी ।
नित्यक्लिन्नापि[2] हि तथा भेरुण्डा वह्निवासिनी ॥२६॥
महाविद्येश्वरी दूती त्वरिता कुलसुन्दरी ।
नित्या नीलपताका च विजया सर्वमङ्गला ॥ २७ ॥
ज्वालामालिविचित्रा[3] चेत्येवं नित्यास्तु षोडश ।

प्रथमेति प्रधानेत्यर्थः । दूती शिवादूती, नित्येति तदभिधानैवेत्यर्थः ॥

तत्र

शृणु देवि महानित्यामादौ त्रिपुरसुन्दरीम् ॥ २८ ॥
यया विज्ञातया देवि[4] जगत्क्षोभः प्रजायते ।

ननु भगवता महात्रिपुरसुन्दरीं नित्यां शृणवेति प्रतिज्ञातेऽपि कस्मादाकस्मिकं चक्रस्य उद्धारो वक्तुमुपक्रान्तः । एवमेतत्, किंतु परैवहि परमेश्वरी भगवती नित्या स्वस्वान्त्र्यमाहात्म्यात् तत्तद्रूपतया बहिरुल्लिलसिषुः प्रथमं तावदाधाराधेयात्मना प्रस्फुरति, आधारमन्तरेण च आधेयस्य कथङ्कारं बहिःस्फुरणं स्यादिति प्रमुख एव परमेश्वरश्चक्रस्य स्वरूपं निरूपयितुमाह

शक्त्या शक्तिं विनिर्भिद्य भूयो वह्निपुरेण तु ॥२९॥

---

१ 'नित्याषोडशिका' ग. । २ 'भिधा नित्या भुसुण्डा' ग. । ३ 'मालिनिका चित्रा' ग. । ४ 'गौरि' ग. । ५ 'ते' ग. पाठः ।

संपुटीकृत्य सर्वोर्ध्वशक्तिं विस्तारयेदधः ।

इह खलु त्र्यश्रमेव सृष्टिप्राधान्यात् बहिर्मुखत्वादधोमुखं शक्तिरुच्यते, संहारप्राधान्यादन्तर्मुखत्वादूर्ध्वमुखं वह्निरिति । यदागमः

'तच्छक्तिपञ्चकं सृष्ट्या लयेनाग्निचतुष्टयम् ।'

इति । श्रीमदस्मत्परमगुरवोऽपि

'शक्तिं त्रिकोणामेकाराकृतिं सृष्ट्युन्मुखीम् ।'

इति.

'वह्निपुरेण संहारप्रधानोर्ध्वमुखत्रिकोणेन'

इति,

'ऊर्ध्वाधोवदनाभ्यां त्र्यश्राभ्यां वह्निशक्तिनामभ्याम् ।'

इति च । अन्येऽपि

'वह्निचतुष्टमयत्र भ्रममध्ये शक्तयः स्थिताः पञ्च ।
ऊर्ध्वमुखं सृष्टिमुख.............................. ॥'

इति । अन्यैः पुनः शक्तिवह्न्योर्भेदप्रतिपिपादयिषया यत्

'त्रिभिश्छित्त्वा तु परिधिं सकले चतुरश्रके ।
त्र्यश्रं क्षेत्रं प्रकुर्वीत सूत्रैः प्रागादिसंस्थितैः ॥
त्र्यश्रवत् पश्चिमाशाग्रकोणं क्षेत्रं भगाकृति ।'

इति संवादितं, तदत्र तथा न संगच्छते यतस्तु त्र्यश्रासिद्धिमात्रप्रतिपादनपरत्वमेव साक्षात् लक्ष्यते । तदपि हठविहेठनिकया यदि अशब्दार्थमपि ऊर्ध्वाधोमुखं त्र्यश्रद्वयं व्याख्यायते, तदपि तत्र सिषाधयिषितं वह्निशक्तिव्यपदेश्यत्वं न सिध्येत् । भगयोनित्र्यश्रादिशब्दव्यपदेश्यत्वं तु अन्यथापि सर्वत्र दृश्यते । यदागमः

'ऊर्ध्वाधोमुखमध्यस्थत्र्यश्रमर्मद्वयावधि ।'

इति । तथा

'एकैकदण्डकैः प्राज्ञः षट्षट् सूत्राणि पातयेत् ।
योनयो येन जायन्ते समस्ताः समसन्धयः ॥
कोष्ठका न्यूनपञ्चाशद्भगरूपाणि तानि च ।'

इति । गुरवोऽपि

'त्र्यश्रान्तपञ्चकमुक्तं तुर्याग्निपञ्चशक्तिकम् ।'

इति,

'सर्वत्रिकोणस्यैकैककोणोपान्तप्रसर्पिभिः ।
षड्भिः षड्भिर्भवेत्सूत्रैः सप्तसप्तकयोनिकम् ॥'

इति च । तत्र पूर्वाधोमुखत्रिकोणविषयोऽपि त्र्यश्रशब्देन व्यपदेशः, उत्तरत्र ऊर्ध्वमुखत्रिकोणविषयोऽपि भगयोनिशब्दाभ्यामिति न सङ्गतार्थमेतत्किंचित्,–इत्यलं बहुना । तत्र यथाभिमते क्षेत्रे प्रथमं तावदधोमुखत्र्यश्रकाणां शक्तिमुल्लिख्य अधस्तात् तादृश्यैव अन्यया शक्त्या मध्यतास्तिर्यक्प्रवेशक्रमेण विनिर्भेदयेत् येन मूलत्रिकोणनिष्पत्तिः स्यात्, भूयश्च ते द्वे अपि शक्ती परस्परसंमुखाग्रकोणसंपुटीकारे वह्निपुरेण ऊर्ध्वमुखेन त्रिकोणेन संपुटीकृत्य मूलत्रिकोणाग्रकोणात् किञ्चिदन्तरालं

'पश्चिमोत्तरपूर्वादिदक्षिणानुक्रमेण तु ।
चक्रमध्ये चतुष्कं तु क्रमेण परिपूजयेत् ॥' (१ । १५६)

इतिवक्ष्यमाणदृष्ट्या परिस्थाप्य अधस्तनायाः शक्तेरन्तस्तिर्यक्प्रवेशक्रमेण तस्या एव बहिरधः पार्श्वयोश्च कोणत्रयमन्तश्च ऊर्ध्वगत्या पार्श्वयोः कोणद्वयं तन्मर्मस्पर्शपुरःसरमुपरितनायाः शक्तेरुत्पाद्य उपर्यपि कोणोत्पत्तये प्रसरणेन संवलिते कृत्वा अन्तस्त्र्यरमष्टारं द्विशक्तिकैकानलं भवतीति महागुरुनिरूपितस्वरूपमष्टारं कुर्यादिति यावत् । यैः पुनः साक्षात्कृतविषमतमपदयोजनानपि अन्यानप्रतिबुद्ध्यैव

कैरपि धूर्तैर्विषमपदयोजनावैशसमपहाय वाक्यैर्वाक्यानि घटयद्भिर्वयं हासिता इत्युक्त्वापि स्वयं शक्त्येति संमुखत्रिकोणरूपामेव विनिर्भेद्य वह्निपुरेण ऊर्ध्वमुखत्रिकोणात्मना ते शक्ती संपुटीकृत्येति शब्दैरेव शब्दा व्याख्यातास्तेषां पदे कियदुपहस्यते यत् धार्ष्ट्यात् यत्तद्वदतां विरतिरेव नास्तीत्यास्तामेतत् । तथा सर्वस्य चक्रस्य ऊर्ध्वपूर्वकोटिमवलम्ब्य उल्लिखिता या शक्तिस्तां पार्श्वद्वयप्रसारणक्रमेण अधो विस्तारयेत्, अष्टाराधस्तनाराद्वयसंस्पर्शनेन प्रथमदशारारम्भिकां तृतीयां शक्तिं कुर्यादित्यर्थः ॥

तथैव वह्निचक्रेण तामेवोर्ध्वं विभेदयेत् ॥ ३० ॥

तथैव आद्यशक्तिवत् पार्श्वद्वयप्रसारणक्रमेण उन्मुखत्रिकोणात्मना वह्निचक्रेण तामेव समनन्तरप्रसारितां शक्तिं विशेषेण अष्टारोपरितनपार्श्वद्वयवर्तिकोणचतुष्टयसंस्पर्शादग्रकोणस्य अस्य उत्पादनपूर्वमूर्ध्वं भेदयेत् येन द्वितीयोऽपि वह्निः सिद्ध्येत् ॥ ३० ॥

येन

तत ऊर्ध्वस्थितां शक्तिमूर्ध्वं विस्तारयेत् क्रमात् ।

तदनन्तरमूर्ध्वस्थितां प्रथमोल्लिखितामेव शक्तिं तृतीयशक्तिद्वितीयवह्न्युपरितनसंभेदग्रन्थिभेदनपूर्वं प्राथमिकवह्निपुराग्रकोणसाम्यलक्षणं क्रममवलम्ब्य ऊर्ध्वं विस्तारयेत् येन अस्य दशारस्य पञ्चमसप्तमाराद्वयं स्यात् ॥

ततोऽपि

पुनराद्यं वह्निचक्रमधो विस्तार्य सुन्दरि ॥ ३१ ॥
ग्रन्थिभेदक्रमेणैव शक्तिमाद्यां विभेदयेत् ।

आद्यमष्टारचक्रारम्भकं वह्निपुरशब्दाभिहितं वह्निचक्रं द्वितीयवह्निसिद्ध्यर्थं पार्श्वाभ्यां प्रसारितमपि पुनस्तद्द्विती-

यवह्नितृतीयशक्तयधस्तनसंभेदग्रन्थ्योर्भेदनक्रमेणैव अधो वि- स्तार्य एतच्चक्रापेक्षया आद्यां वस्तुतस्तु तृतीयां शक्तिं विशे- षेण द्वितीयशक्तयग्रकोणसाम्येन भेदयेत् योजयेदिति दशा- रचक्रसिद्धिः ॥

ततोऽपि

**तथा सर्वोर्ध्ववह्न्यन्तशक्तिं[1] विस्तारयेदधः ॥ ३२ ॥**

सर्वोर्ध्वे दशारोपरिवर्ती द्वितीयो यो वह्निस्तस्य अन्ते निकटे या सर्वोपरिवर्तिनी एव आद्या शक्तिस्तामधो विस्ता- रयेत् पार्श्वद्वयप्रसारणक्रमेण दशारसंबन्ध्यधस्तनपार्श्वद्वयी- यकोणचतुष्टयसंस्पर्शेन द्वितीयदशारारम्भिकां चतुर्थीं शक्तिं जनयेदित्यर्थः ॥ ३२ ॥

तथा

**तामादिचक्राधःशक्त्या[2] वह्निनोर्ध्वं विभेदयेत् ।**

तां समनन्तरोल्लिखितां चतुर्थीं शक्तिमादिचक्रस्य अन- न्तरासिद्धस्य दशारस्य या अधस्तनी तृतीया शक्तिस्तदुप- लक्षितेन आद्येन वह्निना विहितपार्श्वद्वयप्रसारणेन ऊर्ध्वं विशेषेण दशारोपरितनकोणचतुष्टयसंस्पर्शपूर्वं वह्निद्वयाग्र- कोणसाम्येन भेदयेत् तृतीयं वह्निं जनयेदित्यर्थः ॥

ततोऽपि

**पुनः[3] पूर्ववदेवाद्यां शक्तिं विस्तार्य भेदयेत् ॥ ३३ ॥**

**ऊर्ध्ववह्निम्.......................... ।**

आद्या प्रथमोल्लिखिता शक्तिर्यथा पूर्वं प्रथमदशारस्य पञ्चमसप्तमारासिद्ध्यर्थं शक्तिवह्निग्रन्थिभेदनपूर्वं विस्तारिता, तथैव तां पुनरपि विस्तार्य ऊर्ध्वस्थितं तृतीयं वह्निं मध्य-

---

१ 'न्तः' ग. । २ 'शक्तिं' ग. पाठः । ३ 'ततः' ग. पाठः ।

तस्तिर्यक्प्रवेशक्रमेण भेदयेत् स्पष्टां रेखां विधाय उपरित-नमरात्रयं कुर्यादित्यर्थः ॥ ३३ ॥

तथा

......अधोवह्निमध्ये[1] वह्निविवर्जितम् ।
विस्तार्य भेदयेच्छक्तिमधस्तादूर्ध्ववह्निना[2] ॥ ३४ ॥

अष्टारारम्भकोणप्रथमोल्लिखितेन ऊर्ध्ववह्निना वह्नेः प्रथ-मदशारारम्भकस्य द्वितीयस्य वर्जनं कृत्वा तदुपयोगमनपेक्ष्य अधोवह्नेरेतद्द्वितीयदशारारम्भकतया पश्चादुल्लिखितस्य तृतीयस्य अधस्तनस्य ग्रन्थिद्वयस्थानात्मनि मध्ये विस्तार्य अर्थादौर्ध्ववाह्नमेव पार्श्वरेखाद्वयं विस्तृतं विधाय अधस्तात् व्यवस्थितां चतुर्थीं शक्तिं भेदयेत् समनन्तरोक्तवदधस्तन-मपि अरात्रयमुत्पादयेदिति द्वितीयदशारसिद्धिः ॥ ३४ ॥

तथा

अतो[3] मध्यादिशक्त्यूर्ध्वशक्तिं विस्तारयेदधः ।

मध्या प्रथमशक्तिभेदिका या द्वितीया शक्तिस्तस्या आ-दावुपरि स्थिता या प्रथमदशारारम्भिका तृतीया शक्तिस्त-स्या अपि ऊर्ध्वे द्वितीयदशारसंबन्धिनी चतुर्थी शक्तिस्ता-मधो विस्तारयेत् पार्श्वद्वयप्रसारणक्रमेण द्वितीयदशारपा-र्श्वाराचतुष्टयसंस्पर्शपुरःसरां पञ्चमीं शक्तिं कुर्यादित्यर्थः ॥

किं तया स्यादित्याह

तथैव संपुटीकुर्यात् सर्वं[4] चक्रं सुरेश्वरि ॥ ३५ ॥

एवकारो भिन्नक्रमः । तेन सर्वमेव चक्रमिति । एतच्च अशेषत्वेन फलमुक्तम् ॥ ३५ ॥

---

१ 'मध्यव' ग. । २ 'दाद्यवाह्निना' ग. । ३ 'ततो मध्यादिशक्त्यूर्ध्वे' ग. । ४ 'सर्वचक्रं' ग. पाठः ।

ततोऽपि

तां च तेन महेशानि वह्निचक्रेण भेदयेत् ।
ग्रन्थिभेदक्रमेणार्धः सर्वोर्ध्वात्सर्वबाह्यतः ॥ ३६ ॥
मध्योर्ध्वशक्तिपर्यन्तम् ..................... ।

तां समनन्तरोल्लिखितां पञ्चमीमेव शक्तिं सर्वस्य चक्रस्य बाह्यतो, नतु अन्तः, सर्वस्यैव चक्रस्य ऊर्ध्वमवलम्ब्य स्थितं यत् तृतीयं वह्निचक्रं, नतु प्रथमं, तेन अर्थात् तस्यैव अधस्तयैव शक्त्या मेलनात्मकौ यौ ग्रन्थी तयोर्यो भेदस्तत्क्रमेण पार्श्वद्वयेन प्रसृत्य अर्थात् चक्रस्यैव मध्योर्ध्वे ये चतुर्थप्रथमे शक्ती तत्पर्यन्तमुपरितनतत्कोणचतुष्टयस्पर्शनक्रमेण भेदयेत् संयोजयेत् येन चतुर्थो वह्निः सिध्येत् ॥

तथा

....................आदिशक्त्यवधि प्रिये ।
ततो बाह्यस्थशक्त्यन्तःशक्तिमूर्ध्वं विकासयेत् ॥३७॥

तदनन्तरं बाह्यस्था या पञ्चमी शक्तिस्तस्या अन्तर्गर्भे या चतुर्थी, तामादिशक्त्यवधि प्रथमशक्तिपर्यन्तमूर्ध्वं विकासयेत् पार्श्वद्वयेन प्रसृत्य तया संयोजयेत् येन अस्य चक्रस्य षष्ठदशमात्मकमराद्वयं स्यात् ॥ ३७ ॥

ततः

सर्वोर्ध्ववह्न्यधोवह्निपर्यन्तं वीरवन्दिते ।
तथा विस्तारयेच्छक्तिमाद्यामप्यूर्ध्वमीश्वरि ॥ ३८ ॥

सर्वस्य चक्रस्य ऊर्ध्वे यश्चतुर्थो वह्निस्तस्यापि अधो यस्तृतीयो वह्निस्तत्पर्यन्तं तदग्रकोटिसंलग्नत्वेन आद्यां प्राथ-

---

१ 'स्यैव सर्वोर्ध्वं' ग. पाठः ।

मिकां दशारद्वयसंपत्त्यर्थं पुनःपुनःप्रसारितामपि शक्तिं तथा पार्श्वद्वयप्रसारणपुरःसरं स्पष्टरेखाकारतया ऊर्ध्वं विस्तारयेत् यथा चतुर्थवह्निभेदनक्रमेण चतुर्दशारस्य उपरितनमरात्रयं सिध्येत् । ३८ ॥

ततोऽपि

तया विभेदयेद्वह्निचक्रं सर्वोर्ध्वसंस्थितम् ।
सर्वोर्ध्ववह्न्यधोभागग्रन्थिपर्यन्ततः प्रिये ॥ ३९ ॥
विस्तार्य बाह्यशक्तिं तु सर्वाधस्ताद्विभेदयेत् । *

सर्वोर्ध्ववह्न्यधोभागग्रन्थिपर्यन्तत इत्येतत् काकाक्षिवत् योज्यम्, तेन सर्वापेक्षया ऊर्ध्वमुपरि अवस्थितस्य चतुर्थस्य वह्नेरधोभागतृतीयाग्निपञ्चमशक्तिसंभेदात्मकौ यौ ग्रन्थी, तत्पर्यन्ततस्तया समनन्तरोक्तयैव त्रिकोणाकारप्रसरणादिरूपया भङ्ग्या सर्वेषां चतुर्णामपि वह्नीनामूर्ध्वमादौ सम्यगष्टारारम्भकतया स्थितं वह्निपुरशब्दाभिहितं वह्निचक्रं विभेदयन् संयोजयेत्, येन अस्य चक्रस्य तृतीयत्रयोदशारासिद्धिः स्यात्, तथा सर्वेषां वह्नीनामूर्ध्वमष्टारसंपत्तिनिमित्तमुल्लिखितः प्रथमं समनन्तरकृतयोजनो यो वह्निस्तस्य अधोभागे यौ पञ्चमशक्तितृतीयवह्निसंगमनरूपौ ग्रन्थी, तत्पर्यन्तोऽर्थात् तत्पार्श्वरेखाद्वयं विस्तार्य सर्वाधस्तात् बाह्यां पञ्चमीं शक्तिं विभे-

---

* एतद्बाह्यगतं पद्ममष्टपत्रं समालिखेत् । तद्बाह्यतोऽपि देवेशि षोडशारं तथैवच ॥ परिवेषं भूपुरं च चतुर्द्वारोपशोभितम् । मध्यं त्र्यश्रं तथाष्टारं द्वे दशारे चतुर्दश ॥ तद्बाह्यतोऽष्टपत्रं च षोडशारं महीप्रदम् । सर्वानन्दमयं चादौ सर्वसिद्धिप्रदं परम् ॥ सर्वरोगहरं चान्यत्सर्वरक्षाकरं तथा । सर्वार्थसाधकं चक्रं सर्वसौभाग्यदायकम् ॥ सर्वसंक्षोभणं चान्यत्सर्वाशापरिपूरकम् । त्रैलोक्यमोहनं चेति नवधा नवभिर्भवत् ॥ ग० पु० इमे श्लोका अधिकाः पठिताः ।

दयेत्, येन चतुर्दशारस्य अधस्तनमरात्रयं सिद्ध्येदिति शक्तिपञ्चकाग्निचतुष्टयात्मनः सकलस्य अस्य चक्रस्य निष्पत्तिः ॥

एतदेव व्याप्तिप्रतिपादनपुरःसरमुपसंहरति

ततः सृष्ट्या महाचक्रं प्रथमं तु हुताशनम् ॥४०॥
मध्ये तु द्वितयं स्थित्या संहारं पञ्चमं च यत् ।
एवमेतन्महाचक्रं महाश्रीत्रिपुरामयम् ॥ ४१ ॥

एवमुक्तेन क्रमेण एतदत्यद्भुतसंनिवेशवत्त्वात् पुरःस्फुरद्रूपतया अवभासमानं तत्तच्छास्त्रान्तरोदितचक्रान्तरवैलक्षण्यात् महत् प्रमातृप्रमेयात्मनो विश्वस्य करणात् चिरमवस्थापनेन विकासनात्, स्वात्मसाक्षात्कारेण कर्तनात् सर्वतोविगलनेन चिदेकशेषतया पूर्णत्वाद्यपरपर्यायतृप्ततापादनेन च सृष्टिस्थितिसंहारानाख्यरूपतया चक्रशब्दव्यपदेश्यम्, अत एव स्वस्वातन्त्र्यविजृम्भामात्रसारमखिलमिदं विश्वमोतप्रोततया व्याप्नुवन्ती निरतिशयचिदानन्दघनस्वस्वरूपशालितया श्रीप्रधाना, त्रीणि सृष्टिस्थितिसंहारलक्षणानि गर्भीकृतानन्तत्रिकाणि पुराणि तत्तद्विभागापूरकाणि स्वसंविद्विस्फूर्जितानि मकुरनगरन्यायेन स्वेनैव स्वभित्तावनतिरिक्तानि अपि अतिरिक्तायमानानि उल्लासयन्ती निरुपाख्यपरसंविन्मात्रसतत्त्वा महात्रिपुरसुन्दरीशब्दव्यपदेश्या या त्रिपुरा, तत्प्रकृतिकम्

'आधाराधेयरूपाय.......................... ।'

इतिवत् तदविभागस्वभावमेवेत्यर्थः । तथाहि प्रथमं तावत् चतुर्दशारतया महत् यत् चक्रं, तत् सृष्ट्या उपलक्षितम् । चतुर्दशविधैवहि बहिः सृष्टिः । यत्

'संसारा दश चत्वारः............................. ।'

इति । ततो मध्ये तु अरादशकौचित्येन हुताशनस्वरूपं चक्र-

द्वितयं स्थितिरूपम् । स्थितिर्हि उभयस्वभावैव भवेदिति भावः । यदाहुः

'प्रभवाप्ययोरन्तर्लीलीभूतः क्रमोऽवताराख्यः ।'

इति । मूलचक्रापेक्षया द्वितीयमपि अष्टारं चक्रम्

'आद्यचक्रे महेशानि.................... ... ।' (१।१५७)

इतिवक्ष्यमाणवद्राभूयस्त्वाभिप्रायेण प्रथमत्वेन उद्दिष्टं संहारप्रधानम् । यतः श्रीयोगसञ्चारादावपि

'............मध्यगे ये ते कृष्णश्वेते च मण्डले ।'

इति

'षोडशद्वादशाराभ्यामष्टारेषु च सर्वशः ।'

इत्यादिना अपि अष्टारस्य संहारप्रधानत्वमेव उक्तम् । अत एव पारिशेष्यात् मूलत्रिकोणस्य अपि निर्विभागस्वभावतया अनाख्यरूपत्वमर्थसिद्धम् । अत एव चक्रपञ्चकस्य सर्वसौभाग्यकारकमिति सर्वार्थसाधकमिति सर्वरक्षाकरमिति सर्वरोगहरमिति सर्वानन्दकरमिति च सृष्ट्यादिक्रमचतुष्टयोचितमेव अभिधानमिति यथोक्तमेव युक्तम् । यत् पुनरत्र अन्ये पाठादौ विप्रतिपद्यन्ते, तत् यत्तत्प्रायमिति उपेक्ष्यमेव यतः पाठभेदस्तावदत्र स्थितः स च अध्येतृभ्रमोपकल्पित एव, न मौलः; तत्परिग्रहापरिग्रहौ च साधुत्वासाधुत्वनिबन्धनौ, प्रक्रियागौरवपरिहारेण प्रकृतार्थनिर्वाहनैपुण्यं च नाम साधुत्वमन्यत्तु अन्यथा । यदाहुः

'पाठभेदोऽत्र साधुर्वा तदन्यो वा न मूलतः ।
किन्त्वध्येतृभ्रमात्तेन तत्प्रदर्शनमज्ञता ॥'

इति,

'अथैकः पुस्तकाभ्यासे पाठो ग्राह्यो विचार्य चेत् ।
साधुरेवतु स ग्राह्यः साधूनामविगानतः ॥'

इति च । तच्च इह अस्तीति किं प्रलप्यते भवद्भिरौत्तरा-धर्यस्वपाठलाभादीति, प्रत्युत भवतामेव अयं दोषो यदस्माभिर्यावता ग्रन्थेन चक्रनिष्पत्तिस्तद्व्याप्तिश्चेत्युभयं व्याख्यातं, तावतैव गुर्व्या प्रक्रियया भवद्भिश्चक्रनिष्पत्तिमात्रमिति । सन्ति च अत्र ग्रन्थगौरवं परिहरन्तः परे साक्षिण इति अलं तच्चिन्तया अपि यदिदमेव अत्र प्रतिसमाधानमिति । यथोक्तायाश्च व्याप्तेरेव तथा अनुचितत्वं न किंचिदुत्पश्यामः । यत्

'पुष्पे गन्धस्तिले तैलं देहे जीवो जलेऽमृतम् ।
यथा तथैव शास्त्राणां कुलमन्तः प्रतिष्ठितम् ॥'

इतिदृष्ट्या पदद्वयमथं कौलिकं ज्ञानं सर्वत्रैव अन्तरनुप्राणकतया वर्तते इति नास्ति विमतिः, अन्यथाहि न किञ्चिदपि भुक्तिमुक्तिप्रदं स्यादिति उक्तमन्यत्र बहुशः । अत एव श्रीतन्त्रालोके

'पाशवेष्वपि शास्त्रेषु तददर्शि महेशिना ।
घोरान्ध्यहैमननिशामध्यगाचिरदीप्तिवत् ॥'

इत्यादिना तत्र कुलज्ञानस्य अधराधरेषु अपि अनुप्राणकत्वमुक्तम् । अनेनैव आशयेन भवद्भिरपि

'ऊर्मिरिति भोगिनीत्यपि कुब्जेति कुलेश्वरीति जगदुर्याम् ।
'श्रीकालकर्षणीत्यपि कुण्डलिनीत्यपि च नौमि तां देवीम् ॥'

इत्यादि उक्तम् । तत्सर्वत्रैव साक्षात्कुलशास्त्रतया व्यपदिष्टेऽमुष्मिन् परमोपादेये शास्त्रे किमेवंविधाया व्याप्तेरनानुगुण्यं यद्बाधामात्रेणापि न स्पृष्टम् । एतच्च परमेश्वरः स्वकण्ठेनैव चतुर्थपटलारम्भे वक्ष्यतीति अलं रहस्यार्थोदञ्चनेन । प्रत्युत स्वकण्ठोक्तामेवंविधां व्याप्तिमपहाय

---

१ 'श्रीकालीति' ख. पाठान्तरम् ।

'चक्रं बैन्दवमम्बिकामयमियं वामा त्रयो ये भ्रमा
ज्येष्ठेयं यदिदं पुरन्दरपुरे रेखाचतुष्कं बहिः ।
योऽयं शक्रधनलत्रिकोणनिवहो रौद्रीयमित्यामृशन्
योऽर्चाधारमकृत्रिमं कलयते मातः स ते पूजकः ॥'

इत्यादिव्याप्तिप्रतिपादनपरं बहुप्रकारं स्वोत्प्रेक्षितं यत्तद्वदतां किमपि परिनिष्ठितं तन्निबन्धनं यदादिवर्णोद्धारादौ यथासामेव संनिवेशवत्त्वमिति, नैतत् । इयंहि च अशेषेण पञ्चाशत्सिद्धिः । यदादिवर्णोद्धारादौ यथासामेवं सन्निवेशवत्त्वं तत इह किमायातं यदेवमुच्यते । एवमपि तत्र आसामेवंसन्निवेशवत्त्वं नैकान्तिकमिति कुत इहापि एतत्स्यात् , यदम्बिकायाः

'अकारस्य शिरो रौद्री वक्त्रं वामा प्रकीर्तिता ।
अम्बिका बाहुरित्युक्ता ज्येष्ठा चैवायुधं स्मृता ॥'

इत्यत्र स्पष्टरेखाकारं बाहुत्वमुक्तं

'उत्थिता तु यदा तेन कला सूक्ष्मा तु कुण्डली ।
चतुष्कलमयो बिन्दुः शक्तेरुदरगः प्रभुः ॥
मध्यमन्थकयोगेन ऋजुत्वं जायते प्रिये ।
ज्येष्ठा शक्तिः स्मृता सा तु विन्दुद्वयसुमध्यगा ॥
त्रिपथा सा समाख्याता रौद्री नाम्ना तु गीयते ।
शशाङ्कशकलाकारा अम्बिका त्वर्धचन्द्रिका ।
एकैवेत्थं परा शक्तिस्त्रिधा सा तु प्रजायते ॥'

इत्यत्र च उकारात्मकशशाङ्कशकलाकारत्वं, वामायाश्च अत्र नामापि न स्पृष्टम । इहापि वक्ष्यमाणे

'कवलीकृतनिःशेषबीजाद्यङ्कुरतां गता ।
वामा शिखा ततो ज्येष्ठा शृङ्गाटाकारतां गता ॥
रौद्री तु........................... ॥' (४।६)

इत्यादावम्बिकायाः, श्रीसर्ववीरादौ च तत्र तत्र वर्णान्तरोद्धारादावपि [1]नवनव आसां संनिवेशः प्रकाशित इति वर्णान्तरोद्धारमात्रेऽपि यत्र नियतमासां रूपं नास्ति तत्रैवमादावन्यत्र का वार्तेति नास्त्येव अत्र परिनिष्ठितं किंचित् निबन्धनमिति निश्चयः । यद्वा वार्तिककारस्यैव अयं दोषो यदुपजीवनेनापि भवान् प्रवृत्त इति अलं बहुना ॥ ४१ ॥

इदानीमस्तैव माहात्म्यमाह

क्लेदनं द्रावणं चैव क्षोभणं मोहनं तथा ।
आकर्षणं महादेवि [2]जृम्भनं स्तम्भनं तथा ॥ ४२ ॥
व्याधिदारिद्र्यशमनं सर्वदुर्नीतिनाशनम् ।
शान्तिपुष्टिधनारोग्यमन्त्रसिद्धिकरं परम् ॥ ४३ ॥
भोगदं मोक्षदं चैव खेचरत्वप्रवर्तकम् ।
सर्वरक्षाकरं देवि सर्वानन्दकरं तथा ॥ ४४ ॥
सर्वकर्मकरं चापि सर्वकार्यार्थसाधकम् ।
सर्वावेशकरं देवि सर्ववेधकरं पुनः[3] ॥ ४५ ॥
सर्वतत्त्वकरं[4] देवि सर्वाज्ञानिलयं तथा ।
सर्व[5]र्द्धिसंयुतं चैव सर्वश्रेयस्करं परम् ॥ ४६ ॥
सर्वमन्त्रमयं देवि सर्वतीर्थमयं पुनः ।
सर्वव्रतमयं चैव सर्वामृतमयं तथा ॥ ४७ ॥
सर्वदुःखप्रशमनं सर्वशोकनिवारणम् ।
सर्वोन्मादकरं देवि सर्वयोगीश्वरीमयम् ॥ ४८ ॥

---

१ ‘नवनवसासंनिवेशः’ ख. पाठः । २ ‘जृम्भणं’ ग. । ३ ‘परम्’ ग. ।
४ ‘सर्वतत्त्वमयं देवि सर्वज्ञानप्रदं तथा’ ग. । ५ ‘सर्वसिद्धिप्रदं’ ग. ।

सर्वपीठमयं देवि सर्वज्ञानमयं प्रिये ।
सर्वदेवमयं देवि सर्वाह्लादनकारकम् ॥ ४९ ॥
सर्वदौर्भाग्यशमनं सर्वविघ्ननिवारणम् ।
सर्वसिद्धिकरं[2] चक्रं सर्वाशापरिपूरकम् ॥ ५० ॥
रौद्राभिचारको[3]चण्डपरमन्त्रौघभक्षकम् ।
परसिद्ध्याकर्षणं च पराज्ञाकर्षणं तथा ॥ ५१ ॥
परसैन्यस्तम्भकं च परविज्ञानमोहनम् ।
परवक्त्र[4]स्तम्भकं च शस्त्रस्तम्भनकं परम् ॥ ५२ ॥
महाच[5]मत्कारकरं महाभुक्तिप्रवर्तकम् । *
महावश्यकरं देवि महासौभाग्यदायकम् ॥ ५३ ॥
महाज्वरहरं देवि महाविषहरं पर[6]म् ।
महामृत्युप्रशमनं महाभयवि[7]नाशनम् ॥ ५४ ॥
महापुरक्षोभकरं महासुखशुभप्रदम् ।
महालक्ष्मीमयं देवि महामङ्गल्यदायकम् ॥ ५५ ॥
महाप्रभावसंयुक्तं महापातकनाशनम् ।

क्लेदनद्रावणयोः पृथङ्निर्देशे सामान्यरूपत्वं निमित्तम् । स्तम्भनमेव प्रपञ्चितं परसैन्यस्तम्भकमित्यादिना । सर्वावेशेति पञ्चाशद्भेदभिन्नत्वादिना अन्यत्र उक्तम् । सर्ववेधेति मन्त्रनादादिरूपतया तत्र तत्र बहुधा उदितम् । सर्वतीर्थेति सर्वव्रतेति च तत्तत्फलदायित्वात् । दुःखं क्षोभः सुखप्रतिप-

---

१ 'सर्वदोषहरं' ग. । २ 'प्रदं' ग. । ३ 'कोदण्डं' ग. । ४ 'चक्रस्तम्भकरं' ग. । ५ 'महत्कारकरं महाबुद्धि' ग. । * 'महावाणीकरं देवि महासौख्यप्रदायकम् ।' ग. पु० अधिकः । ६ 'तथा' ग. । ७ 'निवारणं' ग. पाठः ।

त्तभूताधर्मविशेषः, स्वपरानुशोचनमात्रं तु शोकः । महाभुक्तीति लोकधर्म्यपेक्षम् । अनेन च अधिष्ठात्रधिष्ठेययोरभेदमेव द्रढयितुं सर्वानन्दकरामित्यादिपदोपक्षेपेण पूज्यतया अभिमतं चक्रनवकमपि कटाक्षितमिति ज्ञेयम् ॥ ५५ ॥

नच अस्य इयानेव प्रभाव इत्याह

एवमेतस्य चक्रस्य प्रभावो वर्णितुं मया ॥ ५६ ॥

न शक्यते महादेवि कल्पकोटिशतैरपि ।

एतद्बहिरपि किं किंचित्कार्यमास्ति, न वेत्याह

एतद्बाह्यगतं पद्ममष्टपत्रं समालिखेत् ॥ ५७ ॥

तद्बाह्यतोऽपि देवेशि षोडशारं तथैवच ।

परिवेशसमायुक्तं चतुर्द्वारोपशोभितम् ॥ ५८ ॥

षोडशारेति अराशब्दो दलपर्यायः । यदुक्तं

'षोडशारे महापद्मे.................. ।'

इति । तथैवेति पद्ममेवेत्यर्थः । परिवेशेति व्योमरेखा । श्रीरसमहोदधौ पुनरेतत् सुकरत्वाभिप्रायेण सूत्रवर्तनामुखेन अपि उक्तम् । तथाहि

'अथातः संप्रवक्ष्यामि चक्र[1]मङ्कितनिर्णयम् ।

तदर्थं देवि कुर्वीत त्रिहस्तं मण्डलोत्तमम् ॥

तस्य[2] कुर्यात्त्रिभागेन कर्णिकां चक्रलाञ्छिताम् ।

पद्मद्वयं तदर्धेन द्वारक्षेत्रं च तत्समम् ॥

ब्रह्मसूत्रं पुरा दत्त्वा कर्णिकाभ्र[3]ममध्यतः ।

याम्य[4]सौम्यायतं दद्यात्तत्रस्थं सूत्रसप्तकम् ॥

---

१ 'त्रिपुराचक्रमन्यथा' ग. पाठः । २ 'अस्य कार्या तृतीयेन कर्णिका चक्रलाञ्छिता । पद्मद्वयं द्वितीयेन चतुरस्रं च शेषतः ॥' ग. । ३ 'क्रम' ग. । ४ 'याम्या' ग. पाठः ।

तुर्यसूत्रं ततो लुप्त्वा[1] मध्यांशः स्याद्द्विभागिकः ।
तृतीयपञ्चमौ [2]भागौ कृत्वा त्र्यंशविवर्जितौ ॥
तेन [3]भागेन च पुनर्मध्यभागं विवर्धयेत् ।
तृतीयस्य द्वितीयस्य आदिसूत्रस्य चान्तयोः ॥
प्रसारयेदधोधःस्थं ततः सूत्रद्वयं द्वयम् ।
[4]अमे सप्तमके सूत्रे ब्रह्मस्थाने च सङ्गतम् ॥
आपञ्चमादधःस्थानां त्रयाणां चान्ततो नयेत् ।+
सूत्रद्वयं द्वयं चान्यत् त्र्यश्राण्येवं भवन्ति षट् ॥
चतुर्दशारमित्येवं दशारं च प्रसिध्यति ।
सूत्राद्द्वितीयकात्षष्ठाद्ब्रह्मसूत्रस्य पार्श्वयोः ॥
सूत्रद्वयं द्वयं देयमधऊर्ध्वं[5]प्रसारितम् ।
तत्कोटिसंगतं पश्चात्सूत्रयुग्मं प्रसारयेत्[6] ॥
दशारमे[7]वं कथितं चक्रमेतत् तृतीयकम् ।
सूत्रा[8]ग्रात्पञ्चमादूर्ध्वमन्यत्सूत्रद्वयं नयेत् ॥
ऊर्ध्वाधोमुखमध्यस्थत्र्यश्रमर्मद्वयावधि ।
दद्यात् तृतीयसूत्रं च तयोरन्योन्यसङ्गतम् ॥
एवं चतुर्थमष्टारमे[9]कारं चात्र पञ्चमम् ।
इति संसिध्यते चक्रं कर्णिकान्तर्गतं समम् ॥
तच्छक्तिपञ्चकं सृष्ट्या लयनाग्निचतुष्टयम् ।
पञ्चशक्तिचतुर्वह्निसंयोगाच्चक्रसंभवः ॥
तत्रैकमष्टकं [10]मध्ये द्विदशान्तचतुर्दश ।

---

१ 'लुम्पेन्मध्यांशः स्याद् द्विभागतः' ग.। २ 'नागभूपांशौ त्र्यंशवर्जितौ' ग.। ३ 'मानेन ससैव वीथ्यस्तत्रेषु मध्यमम्' ग.। ४ 'भौमे' ग.। +'भौमे प्राथमिके सूत्रे विश्रान्तं च तृतीयके,ग.पु. अधिकः। ५ 'क्रमात्मकम्' ग.। ६ 'प्रसारितम्' ग.। ७ 'देवि संसिद्धं' ग.। ८ 'सूत्रात्पञ्चमकान्मध्यात्' ग.। ९ 'मध्ययोनिश्च पञ्चमे। एवं सिद्ध्यति देवेशि सर्वचक्रं मनोहरम्' ग.। १० 'देवि द्वे दशारे चतुर्दश' ग. पाठः ।

चतुर्दश दशद्वन्द्वमष्टावेकं महेश्वरि ॥
सृष्टिसंहारयोगेन शक्तिस्थानान्यनुक्रमात् ।
स्थितानि त्रिपुराचक्रे यद्बोधाद्[१]मरो भवेत् ॥
बहिः पद्मद्वयं कुर्यादष्टषोडशक[२]च्छदम् ।
[३]चतुरश्रं ततो दत्त्वा कुर्याद्द्वारचतुष्टयम् ॥
चतुष्कोणसमायुक्तमेवं स्यान्मण्डलोत्तमम् ।
रक्तेन रजसापूर्य चक्रं शुक्लोच्चरेखिकम् ॥'

इति । अयमत्र अर्थः । तदर्धेनेति तस्य त्रिभागस्य अर्धेन षडंशेनेत्यर्थः । तेन प्रतिपार्श्वं द्वादशाङ्गुलसंमिते क्षेत्रे पद्मद्वयं कार्यमिति । अन्येषां पुनस्त्रिभागेनेत्येव पाठः । यदाहुः

'तत्र त्रिहस्तयागे कर एको द्वारभूमिगः कल्प्यः ।
षोडशवसुदलकमले हस्तेनच कर्णिका त्र्यंशः ॥'

इति । तत्सममिति पाठद्वयाभिप्रायेण अपि योज्यम् । एवंविभक्तस्य च अस्य त्रिहस्तस्य क्षेत्रस्य भ्रममध्यतः पूर्वापरायतब्रह्मसूत्रयाम्यसौम्यायतसूत्रसप्तकदानभागशब्दादिवचनान्यथानुपपत्त्या चतुरश्रसिद्धिपूर्वं प्रथमं चतुर्विंशतिधा विभजनं कार्यमिति सिद्धं येन हास्तिकस्य कर्णिकाक्षेत्रस्य अष्टभिर्भागैर्विभक्तस्य सर्वमेतत संगच्छते । ततश्च प्रतिपार्श्वं द्वाभ्यां द्वाभ्यां भागाभ्यां पद्मद्वयं, द्वारं च चतुर्भिश्चतुर्भिरिति स्यात् । एवंच ब्रह्मस्थाने बिन्दुं विन्यस्य तदनुसारं कर्णिकापद्मद्वयार्थं भ्रमत्रयविधानं, तदनु चतुरश्रविधिः, परतः कर्णिकायां सूत्रैस्त्रिचत्वारिंशत्त्रिकोणविरचनमित्यादिव्याख्यानं रेखाकर्मानभिज्ञत्वप्रतिपादनफलमतीव हास्यावहतां गुरुपुङ्गवस्य प्रकाशयतीत्यलं चर्यानन्दनाथोपदेशविषंदप्रतिभाविभवैः

---

१ 'भैरवो' ग. । २ 'मच्छदम्' ग. । ३ 'गुणावृत्तं ततः कुर्याच्चतुरस्रं ततो बहिः । चतुर्द्वारसमायुक्तमेवं स्याच्चक्रमुत्तमम्' ग. पाठः ।

सह संभाषितेन, चक्रनिष्पत्त्युपयोगितामात्रप्रतिपादनपरं तु नियतसूत्रोपादानम् । तथाच पूर्वापरायतसूत्रमध्यात् ब्राह्मसूत्रस्यैव शक्तिवर्द्धीनामग्रकोणसाम्योत्पादनमात्रमुपयोगः । ब्रह्मस्थानलाभसूत्रभागगणनाद्युपयोगार्थमुपात्तस्य अपि तुर्यसूत्रस्य चक्रावयवविशेषसंपत्त्यै योग्यतादर्शनार्थं पुनर्लोप उक्तः, इतरेषां तु चक्रनिष्पत्तौ साक्षादेव उपयोगः,-इति द्वितीयादीनां चतुर्णां सूत्राणां द्वितीयषष्ठयोश्च अन्तत आरभ्य सूत्रप्रसारणे ब्रह्मस्थाने च विश्रान्तौ चक्रस्य निष्पत्तिरेव न स्यादित्याशङ्क्य प्रथममेव परमेश्वरस्तत्र तत्र त्र्यंशलक्षणांशरूपहानिप्रदर्शनद्वारा स्थाननैयत्यमेव संक्षिप्तया उक्त्या शिक्षयति तृतीयेत्यादिना । तृतीयस्तच्छब्दसंनिधेस्तृतीयस्मादेव भागात् यः पञ्चमश्च भागस्तौ तृतीयपञ्चमादीनां सूत्राणामन्तत एव प्रसारणस्य वक्ष्यमाणत्वादनागतावेक्षणतन्त्रयुक्त्या अन्तत एव त्र्यंशेन भागस्य त्र्यङ्गुलत्वादङ्गुलपरिमाणेन वर्जितावर्थात् पूर्वतः कृत्वा, पुनश्च परतस्तथैव विधाय, तेन त्र्यंशलक्षणेनैव मार्गेण चतुर्दशारद्वशारापेक्षया मध्यभागं पुनर्द्वितीयब्रह्मषष्ठसूत्रात्मसु त्रिषु स्थानेषु पार्श्वयोर्विवर्धयेत् तत्र तत्र अङ्गुलपरिमाणां वृद्धिं कुर्यादित्यर्थः । इदमुक्तं भवति-इह खलु प्रथमस्य द्वितीयस्य षष्ठस्य सप्तमस्य च सूत्रस्य अग्रमतोऽङ्गुलमात्रं परिवर्ज्य मध्ये च द्वितीयस्य षष्ठस्य च सूत्रस्य अङ्गुलमात्रमधिकीकृत्य तत्र तत्र तथा परिच्छेदार्थं बिन्दुं दत्त्वा सूत्राणि अध ऊर्ध्वं च प्रसार्य वक्ष्यमाणदृष्ट्या तत्र तत्र तेषां विश्रान्तिः कार्या । किन्तु प्रथसूत्रस्य ब्रह्मस्थानेऽपि अङ्गुलमात्रमेव अधिकीकृत्येति शरसंख्यं च तृतीयं नेयमधश्च अङ्गुलेन ऊर्ध्वमिति व्याख्यानं तु अशब्दार्थमिति चक्रनिष्पत्तौ तावत् न साधकं,

प्रत्युत चक्राणां साङ्कर्योत्पादनादिना मर्माणां च सर्वतोविघटनेन बाधकमिति उपेक्ष्यम् ।

'एवं श्रीरसमहोदधेर्ये रहस्यवररत्नराशिसंपूर्णात् ।
कतिचित्सुदुर्लभा अप्युच्छलिताः श्लोकशीकराः सिद्धाः ॥
ते वामकेश्वरागमतो मुक्तविकल्पकालिकाकलुषाः ।
सञ्चारात्कृतवेधाः सर्वेषामुपकरिष्यन्ति ॥
इत्याकलय्य जित्वा गुरुजनदृढमलघु मात्सर्यम् ।
एतान्सद्गुरुलब्धान्विश्वावर्तः प्रवर्तितवान् ॥'

इत्याद्यभिदधद्भिरपि भवद्भिः पञ्चपुरुषीं गृहे गोपयित्वा परिरक्ष्य तदस्तित्वमात्रेण च भाङ्कारशतानि विधाय सूत्रकणिकामात्रमद्यापि न अवगतमित्यतः परं किं नाम मौर्ख्यस्य हास्यस्य वा स्थानं प्रत्युत दग्धं मुखं कृत्वा प्रतिपदमुपजीव्यापि निर्भित्तिचित्रमुल्लिखतां महात्मनां महागुरूणां, नतु एतावता अकुशलपरिकल्पिते परैरपि अन्यथाकर्तुं शक्ये द्वात्रिंशद्भागविभजनादावनागमिके पतनीयमित्युच्यते इति अलं वाचालैः सह संलापनेन । अन्तयोरिति उक्तनीत्या अमतोऽङ्गुलमात्रेण कृतपरिच्छेदयोः । एवमन्तत इत्यत्रापि ज्ञेयम् । ब्रह्मस्थानेऽपि अङ्गुलमात्रेण अधिकीकृते अधःस्थानां त्रयाणामिति पञ्चमषष्ठसप्तमात्मनाम् । द्वितीयकादिति षष्ठादिति तेन उक्तगत्या अङ्गुलेन अङ्गुलेन अधिकीकृतात् । ब्रह्मसूत्रस्य पार्श्वयोरित्यनेन ऊर्ध्वाधरयोरित्यनेन ऊर्ध्वाधरत्र्यश्राग्रकोणसाम्योत्पादनमेव उपोद्घालितम् । अथ ऊर्ध्वमिति यथासङ्ख्यम् । तत्कोटिसङ्गतामिति काकाक्षिन्यायेन योज्यम्. तेन तस्य पूर्वसिद्धस्य दशारस्य कोटाववान्तरसङ्गतं तावदेतत्सूत्रद्वयमध ऊर्ध्वं च प्रसारयेत् यावत् चतुर्थभागार्धप्रायतत्कोटिसङ्गमः स्यादित्यर्थः । तथा तेषां समन-

न्तरदत्तानां चतुर्णामपि सूत्राणां कोटिषु सङ्गतमन्यदपि सूत्रयुग्मं पञ्चाशत्प्रसारितं देयमिति पूर्वेण संबन्धः । ऊर्ध्वेति ऊर्ध्वाधोमुखे मध्यस्थे यत् पूर्वापरतृतीयत्रिकोणद्वयजनिते त्र्यश्रे अन्योन्यसंभेदोत्पादितं मर्मद्वयं, तदवधि तत्पर्यन्तं लक्ष्यीकृत्येत्यर्थः । तदिति चक्रं, चक्रपञ्चकस्य सृष्टिसंहाराभ्यामुपसंहारे शिष्यहितत्वं निमित्तम् । बहिरिति चक्रलाञ्छितायाः कर्णिकायाः । रक्तशुक्लपदद्वयोपादानाच्च रजोन्तरनिषेधः कटाक्षितो यदिह रजोन्तराणामनानुगुण्यादेतावतैव कार्तार्थ्यम् । तेन

'गोरोचनया युक्तं कृत्वा चक्रस्थकर्णिकामध्यम् ।
असितं तदन्तरालं कस्तूरिकयाथवा दुग्धे ॥
छिन्त्वा तां गोधूमैरञ्ज्यम ·············· ।'

इत्यादि न वाच्यम्,–इत्यलं बहुना । अनेनैव आशयेन एतदागमार्थमदृष्ट्वैव अन्यैरपि महागुरुभिराकाशचित्रन्यायेन स्वप्रतिभयैव सूत्रगत्या अस्य

'दशनसमांशे देशे वसुवसुशान्तः समन्ततोथान्तः ।
द्विद्विद्विभागलोपात्पूर्वस्यां पार्श्वयुग्मेऽपि ॥
पादार्धार्धोनयुगत्र्यकांशत्यागतस्ततः परतः ।
ग्रहसार्धकामषोडशविश्रान्तां त्रित्र्यरीकुर्यात् ॥
एवं पश्चात्किंतु प्रथमत्र्यरमब्धिभागसंत्यागात् ।
पार्श्वाभ्यां सार्धनवप्ररूढमन्तस्ततः कार्यम् ॥
मुनिमुनिभागत्यागात्प्रारब्धं पूर्वतस्ततः पश्चात् ।
सार्धनवान्तं कार्यं पार्श्वत्र्यरसंगतं त्र्यश्रम् ॥
इत्थं चक्रं कृत्वा दत्त्वा गगनद्वयं तदन्तरगम् ।
चक्रं कार्यं गुरुभिः परशुनिभारं विकारारम् ॥
बहिरथ भागत्रितये कुर्याद्द्वाराणि कोणयुक्तानि ।

कमलाङ्कतानि शोभावन्त्युपशोभान्वितान्यपिच ॥
इति कथितोऽभिनवोऽयं मार्गः शिवशासनानुसारेण ।
चक्रं सुकरं सुसमं येन च सुमनोहरं भवति ॥'

इत्यादिना उद्धारः कृतः । अत्र तु इयानागमार्थविसंवादी दोषः—यत्क्षेत्रस्यार्धचक्रमध्ये च पद्मादि षोडशदल[म्], पद्म-स्थाने च चक्रं निविष्टकलाष्टकं च द्वारमित्यादि । एतदुपजीवनेन प्रवृत्तैरपि असङ्ख्याख्यागुरुभिरदृष्टत्वाविशेषेऽपि प्रातिभज्ञानवशोन्नीततदागमार्थैस्तदविसंवादिनी चक्रस्य वर्तना संगृहीता । यथा

'श्रुतिभुजभागे क्षेत्रे मध्येऽष्टांशे भ्रमं वितन्वीत ।
तत्रच शक्तित्रितयं पार्श्वाभ्यां पूर्वतश्च तुर्यांशात् ॥
भ्रमतोऽग्न्यंशादगुणादनलांशविवर्जितावमांशाच्च ।
जनयेद्वसुमुनि सगुणांशाब्दिजमेवं च हुतभुजः परतः ॥
किंतु यमांशादग्नि तृतीयमिषुभागगं चतुर्थमथ ।
वेदांशा वा द्विगुणांशरसांशगमेवमेव जलशक्तिः ॥
इष्वन्तं शरशक्तिस्तृतीयशक्त्यग्निसम्भेदात् ।
इत्थं चक्रं वेदाग्निबाणशक्त्यन्वितं सुखं सिद्धः ॥
तदनु द्वितये द्वितये वस्वदष्टिदलं सरोरुहद्वितयम ।
भागानामवशिष्टे चतुरश्रे द्वारमिति यागः ॥'

इत्यलं बहुना । प्रकृतमेव अभिदध्मः ॥ ५८ ॥

एवमाधारस्वरूपनिरूपणानन्तरं प्राप्तावसरमाधेयस्य अपि स्वरूपनिरूपणमित्याह

**संस्थिता तु महाचक्रे महात्रिपुरसुन्दरी ।**

अत्र अधिष्ठातृतया अवस्थितायाश्च अस्याः कथ्यमानं पूजाविधानमवधारयेत्याह

शृणु देवि यथा सा तु[1] पूज्यते साधकोत्तमैः ॥५९॥

वर्गानुक्रमयोगेन देवताष्टकसंयुता ।

देवताष्टकेति अन्तरङ्गत्वादस्य ॥

वर्गानुक्रममेव अस्य दर्शयति

अवर्गः प्रथमो देवि वशिनी तत्र देवता ॥ ६० ॥

तत्परस्तु कवर्गो यस्तत्र कामेश्वरी स्थिता ।

मोदिनी तु चवर्गस्था टवर्गे विमला तथा ॥६१॥

अरुणा तु तवर्गस्था पवर्गे जयिनी स्थिता[2] ।

सर्वेश्वरी यवर्गे तु शवर्गे कौलिनीति च ॥ ६२ ॥

एता वर्गाष्टके देवि[3] अष्टावेवहि देवताः ।

अर्चिताः पुरुषस्याशु प्रकुर्वन्ति वशं जगत् ॥ ६३ ॥

अमन्त्रका हि पूजा न भवतीति आसां बीजाष्टकमेव तावदुद्धरति

उद्धरेत्प्रथमं रेफं तदधः कुटिलान्तर्गम्[4] ।

तदप्यवनिबीजस्थं षष्ठस्वरसमन्वितम् ॥ ६४ ॥

ऊर्ध्वमर्धेन्दुबिन्द्वाढ्यं कारयेत्परमेश्वरि ।

एतत्तद्वशिनीबीजं योगिनीनां मुखे स्थितम् ॥ ६५ ॥

कुटिलः फकारः, तस्य अन्तर्गं ब; अवनिबीजं ल, षष्ठः स्वरः ऊ, अर्धेन्द्वादिना सकलमातृप्रमेयोपक्षेपः कृतः । एवं र्ब्ल्ूँ ॥ ६५ ॥

एवं वशिनीबीजमभिधाय कामेश्वर्या अपि आह

द्वितीयवर्गात्प्रथममैन्द्रोरूढं[5] महेश्वरि ।

---

१ 'सान्न' ग. । २ 'तथा' ग. । ३ 'सम्यक्' ग. । ४ 'न्तकम्' ग.
५ 'मिन्द्रा' ग. पाठः ।

अधस्तान्नाभसं बीजमाग्नेयस्थं समुद्धरेत् ॥ ६६ ॥
चतुर्थस्वरसंयुक्तं बिन्दुखण्डेन्दुलङ्कृतम् ।
एतत्कामेश्वरीबीजं त्रैलोक्यक्षोभकारकम् ॥ ६७ ॥

द्वितीयवर्गात् कवर्गात् प्रथमं क, ऐन्द्रं ल, नाभसं बीजं ह, आग्नेयो र, चतुर्थस्वर ई । एवं क्ल्ह्रीं ॥ ६७ ॥

एवं मोदिन्या अपि आह

अरुणापञ्चमस्याधो वारुणं विनियोजयेत् ।
तदधोऽपीन्द्रबीजं तु सर्वोर्ध्वमिपरं प्रिये ॥ ६८ ॥
एतत्तन्मोदिनीबीजं सर्वतत्त्ववशङ्करम् ।

अधिष्ठात्रधिष्ठेययोरभेदोपचारादरुणाशब्देन तदधिष्ठितस्तवर्गस्तस्य पञ्चमं न, वारुणं व, इन्द्रबीजं ल, सर्वोर्ध्वं बिन्दुः, इपरं ई । एवं न्व्लीं ॥

ततः

वायव्यमिन्द्रबीजस्थं षष्ठस्वरसमन्वितम् ॥ ६९ ॥
अर्धेन्दुमस्तकाक्रान्तं बिन्दुना परिभूषितम् ।
एतत्ते कथितं देवि विमलाबीजमुत्तमम् ॥ ७० ॥
सर्वपापक्षयकरं सर्वोपद्रवनाशनम् ।

वायव्यं य, इन्द्रो ल, षष्ठः स्वरः ऊ । एवं य्लूँ ॥

जकारं कालमारूढं तदधो ज्वलनाक्षरम् ॥ ७१ ॥
चतुर्थस्वरसंभिन्नं[3] बिन्दुनादसमन्वितम् ।
एतत्तदरुणाबीजमरुणं सर्वमोहनम् ॥ ७२ ॥

कालं म, ज्वलनाक्षरं र, चतुर्थः स्वरः ई । एवं ज्म्रीँ । अरुणामियर्ति गच्छतीति अर्थानुगमात् ज्ञानप्रधानमित्यर्थः ॥

---

१ 'सत्त्व' ग. । २ 'नोपरि' ग. । ३ 'संयुक्तं' ग. पाठः ।

शिवबीजं तदादिस्थमधस्तादैन्द्रवारुणौ ।
वायव्यमुपरोद्भिन्नं संयोज्य परमेश्वरि ॥ ७३ ॥
जयिनीबीजमेवेदं नादबिन्दुविभूषितम् ।

शिवबीजं ह, तदादि स, ऐन्द्रं ल, वारुणं व, वायव्यं य, उपर ऊ, एवं ह्स्ल्व्य्ऊँ ॥ ७३ ॥

उद्धरेन्मोदिनीवर्गचतुर्थं परमेश्वरि ॥ ७४ ॥
अधः कालाग्निवायव्यान् क्रमेण विनियोजयेत् ।
दीर्घायुर्बीजसंयुक्तान्यथानुक्रमयोगतः ॥ ७५ ॥
उपरीश्वरबिन्द्वन्तानेकत्र सुरसुन्दरि ।
एतत्सर्वेश्वरीबीजं सर्वत्रैवापराजितम् ॥ ७६ ॥

मोदिनीवर्गश्चवर्गः, तच्चतुर्थो झ; कालो म, अग्नी र, वायव्यो य, दीर्घायुर्बीजं ऊ, एवं झ्म्र्य्ऊँ ॥ ७६ ॥

कौलिनीपञ्चमं देवि कालबीजोपरिस्थितम् ।
सर्वाधस्तादपि तथा वह्निबीजं नियोजयेत् ॥ ७७ ॥
चतुर्थस्वरसंयुक्तं बिन्दिन्दुसमलङ्कृतम् ।
एतद्बीजवरं भद्रे कौलिनीरूपमास्थितम् ॥ ७८ ॥

कौलिन्यधिष्ठितस्य शवर्गस्य पञ्चमं त्त, कालबीजं म, वह्निबीजं र, चतुर्थस्वरः ई, एवं त्त्म्री ँ ॥ ७८ ॥

एतदेव उपसंहरति

एवमेतानि बीजानि क्रमादष्टौ महेश्वरि ।
कथितानि महादेवि ..................

---

१ 'कला' ग.। २ 'विनियोजयेत्' ग.। ३ 'नादे' ग। ४ 'वरे' ग.।
५ 'मयेदानीं' ग. पाठः।

देवीत्यत्र घतानीति अपपाठो महेश्वरीत्यत्र कृतेऽपि छेदे पौनरुक्त्यानिवृत्तेः ॥

न केवलमन्तरङ्गपरिवारभूतदेवताष्टकमन्त्रा उक्ता यावदन्येऽपि उच्यन्ते इत्याह

...... ..................शृणु विद्याङ्गरूपिणीः[1] ॥७९॥

'सैष दाशरथी रामः' इतिवदत्र सन्धिः ॥ ७९ ॥

ता एव उद्दिशति

करशुद्धिकरीं विद्यां तथाङ्गन्यासंसंस्थिताम् ।

आत्मासनगतां चापि तथा चक्रासनस्थिताम् ॥८०॥

सर्वमन्त्रासनगतां साध्यसिद्धासनस्थिताम् ।

देव्यावाहनविद्यां च...... .................... ।

नच एतदेव, यावत्

............... .........मूलविद्यामपि[2] प्रिये ॥८१॥

शृणिवति प्राच्येन[3] संबन्धः ॥ ८१ ॥

एतदेव क्रमेण उद्धरति

वाग्भवं प्रथमं देवि कामराजं द्वितीयकम् ।

शान्तान्तं कादिसंयुक्तमैकारान्तान्तयोजितम् ॥८२॥

एषा विद्या महेशानि करशुद्धिकरी स्मृता ।

उद्धरेदिति पूर्वेण संबन्धः । शस्य तालव्यस्य अन्तो मूर्धन्यः ष, तस्य अन्तः स; कस्य आदिर्विसर्गः, ऐकारस्य अन्त ओकारः, तस्यापि अन्तः औकारः; एवं सौः ॥

---

१ 'रूपिणीम्' ग. । २ 'शृणु' ग. । ३ 'प्राचीन' क. ख. पाठः

ननु इहापि

'वाग्भवं प्रथमं देवि कामराजं ततः पुनः ।
शान्तान्तं कादिसंयुक्तमैकारान्तान्तयोजितम् ॥'

इत्यष्टमपटलोक्तवदेव सामान्येन उपदेशे क्रियमाणे

'प्रथमं वाग्भवं चात्र अवर्णं लोकविश्रुतम् ।
द्वितीयं हंसदेवं तु तृतीयं वह्निवेश्मकम् ॥'

इत्यादिदृष्ट्या वाग्भवादेरनैक्ये सुकुमारबुद्धयोऽनुग्राह्या मुह्येरन्निति विशेषाभिधित्सया स्वयमेव कारुणिकः परमेश्वरो विभज्य इदं बीजद्वयमाचष्टे

**ए–ओमध्यगतं बीजं वाग्विधानाय केवलम् ॥८३॥**
**रुद्रयामलतन्त्रे तु निर्दिष्टं परमाक्षरम् ।**
**मादनं शक्रसंयुक्तं चतुर्थस्वरसंयुतम् ॥ ८४ ॥**
**ऊर्ध्वमर्धेन्दुबिन्द्वाढ्यम्…………………… ।**

एकारौकारयोर्मध्ये गतं ऐ, केवलं शून्यं बिन्दुः, तेन ऐं; मादनं क, शक्रो ल, चतुर्थस्वरः ई, एवं क्लीं; शक्तिबीजं व्याख्यातं, एवं ऐंक्लींसौः । तदुक्तं श्रीनित्याकुले

'उद्धरेत्प्रथमाद्देवि अष्टमं सुरसुन्दरि ।
कालमस्तकसंभिन्नमर्धेन्दुपरिसंस्थितम् ॥
अयं स वाग्भवो देवि वागीशत्वप्रवर्तकः ।
योनिवर्गादिमं बीजं पौरन्दरानियोजितम् ॥
मोहिन्या शिरसाक्रान्तं बिन्दुखण्डेन्दुलङ्कृतम् ।
कामराजो महादेवि कामसिद्धिप्रदायकः ॥
क्षपेशं तु समुद्धृत्य दशमस्वरयोजितम् ।
सृष्ट्यवसानं देवेशि शक्तिबीजमुदाहृतम् ॥'

इति । श्रीरसमहोदधावपि

'ओ-जमध्यगतं वर्णं फोर्ध्वेन शिरसा हतम् ।
अं-गमध्यगतं वर्णं व-रमध्यासनस्थितम् ॥
द्वितीयमेतत्कथितं आऊमध्यं सबिन्दुकम् ।
व-हमध्यं आ-अधःस्थं अं-कमध्येन लाञ्छितम् ॥
प्रथमं त्र्यक्षरा विद्या करशुद्धिकरी स्मृता ।'

इति । ओ-जमध्यगतं ऐ फोर्ध्वं अं, तेन ऐं । अं-गमध्यगतं वह्निपुरापेक्षया क, व-रमध्य इति ल, आऊमध्यं ई, एवं क्लीं । व-हमध्यं स, आ-अधःस्थं औ, अं-कमध्यं अः, एवं सौः । तदनुगुण एवाहि तत्र

'चतुरश्रं पुरं कृत्वा चतुर्विंशाङ्गुलं शुभम् ।
ईशात्पश्चिमगं सूत्रमग्नेः पश्चिमगं पुनः ॥
पूर्वसूत्रं तु संस्थाप्य शेषाणि त्रीणि लोपयेत् ।
त्रिदण्डा तु स्मृता योनिः त्रिमाया सा त्रिदेवता ॥
एकैकदण्डके प्राज्ञः षट्षट्सूत्राणि पातयेत् ।
योनयो येन जायन्ते समस्ताः समसन्धयः ॥
कोष्ठकान्यूनपञ्चाशद्भगरूपाणि तानि तु ।
ईशादकारमारभ्य वारुण्यां तु विनायकम् ॥
विन्यसेन्मातृकां सर्वां विष्ण्वादिशिवपश्चिमाम् ।
एतच्चक्रं लिखेत्पट्टे शुभे दारुमये दृढे ॥
त्रिकोणे च त्रिपादे च वर्णोत्कीलितलक्षणे ।
षण्मासाज्जायते सिद्धिः पूजाजपपरायणे ॥
अतो मन्त्राः समुद्धार्या यथा देवि तथा शृणु ।'

इत्यस्ति प्रस्तारो यस्य अयं संनिवेशः—




एवं करशुद्धिकरीं विद्यामभ्युद्धृत्य अङ्गन्यासंस्थितां द्वितीयामपि उद्धरति

........................आद्यन्ते तत्परं पुनः ।

'एतस्या एव ........................।' (१।८८)

इतिवक्ष्यमाणैवकारमहिम्ना एतस्याः करशुद्धिकर्या एव त्र्यर्णाया विद्याया य आदिर्वाग्भवस्तस्य अन्ते संनिकर्षे पुनस्तस्मात् समनन्तरोक्तात् कामराजात्परं तृतीयं शक्ति-

१ 'कामराजं समुद्धृत' ग. पाठः ।

बीजमर्थात् कार्यं येन कामराजशक्तिबीजयोर्विपर्यासेन स्थितिः स्यात् । यथा ऐंसौःक्लीं । अतःपरंपाठेऽपि अयमेव अर्थः ॥

कारुण्यात् च अत्र परमेश्वरस्तत्परमिति तस्य कामराजस्य परमक्षरं लकारमीकारं वा कस्यचिदाशङ्कनीयं मा भूदित्याह

शान्तान्तं कादिसंयुक्तमैकारान्तान्तयोजितम् ॥८५॥

गतार्थम् ॥ ८५ ॥

एवं

एषा विद्या महाविद्या योगिनीनां महोदया ।
कुलविद्या महेशानि सर्वकार्यार्थसाधकी[1] ॥८६॥

यदुक्तं तत्रैव

'द्वयोः कृत्वा विपर्यासं पूर्वबीजेन वै विना ।
अङ्गन्यासविधौ विद्या द्वितीयेयं कृशोदरि ॥'

इति । पूर्वबीजेनेति वाग्भवेन । द्वयोरिति शिष्टयोर्द्वितीयतृतीययोः; तेन वाग्भवानन्तरं शक्तिबीजं, ततः कामराज इति ॥ ८६ ॥

अङ्गन्याससंस्थाने च अस्याः प्रयोजनं दर्शयति

अनया विद्यया गौरि रक्षामात्मनि कारयेत् ।

अत एव कुलविद्येत्यादि उक्तम ॥

आत्मासनगतां तृतीयामपि विद्यां लक्षयति

एतस्या एव विद्यायाः शिवमायाग्निबिन्दुमत् ॥८७॥
बीजमादिपदे युक्त्वा[2] कार्यात्मासनरूपिणी ।

शिवो ह, माया ई, अग्नी र, एवं ह्रीं । एतस्या आद्यायाः

---

१ 'साधिनी' ग. । २ 'युक्तं तदा' ग. पाठः ।

करशुद्धिकर्या विद्याया एव न पुनरेतद्विकृतिरूपाया द्वितीयस्याः कुलविद्याया आदेर्वाग्भवस्य पदे स्थाने तमपास्य एतन्मायाबीजं योजयित्वा आत्मासनगता विद्या कार्येत्यर्थः । एवं ह्रींक्लींसौः । तदुक्तं

'षाद्यकूर्ध्वगतं पिण्डं आऔअन्तविभूषितम् ।
आद्याया वाग्भवस्थाने ऽयमात्मासनरूपिणी ॥'

षाद्यो ह, तदूर्ध्वं र, पिण्ड इति एतद्वर्णद्वयारब्धत्वात्, आकारस्य अन्तः ई, औकारस्य अन्तः अं, एवं ह्रीं ॥

चक्रासनगतां चतुर्थीमपि आह

पुनर्विद्याद्यमस्योर्ध्वमन्तरंन्तं[1] शिवान्वितम् ॥ ८८॥
त्रैलोक्यमोहनीयं सा विद्या चक्रासनस्थिता ।

पुनः करशुद्धिकर्या आद्याया एव विद्याया यदाद्यं बीजं वाग्भवमन्तरन्तरालवर्ति कामराजं अन्तमन्त्यं शक्तिबीजं च अस्य त्रयस्य अपि ऊर्ध्वं शिवेन हकारेण अन्वितं कुर्यादिति श्रीमदीश्वरशिवाचार्यः । एवं हैँ ह्क्लीं ह्सौः । तदुक्तं

'गृहीत्वा वर्णमेकैकमाद्यमाद्यतृतीययोः ।
तदन्तमूर्ध्वे षाद्येन विद्या चक्रासनस्थिता ॥'

इति।अत्र आद्यतृतीययोर्विद्ययोः क्रमेण आद्यं वर्णं वाग्भवं अन्तं कामराजशक्तिबीजलक्षणं तदेकैकं च वर्णं गृहीत्वा षाद्येन हकारेण ऊर्ध्वं योजयेत्, वर्णत्रयमपि उपरि हकारसंभिन्नं कुर्यादित्यर्थः । अथच तृतीयविद्याद्यक्षरत्वेन अनन्तरमेव उद्धृतस्य अस्य मायाबीजस्योर्ध्वमादौ पुनरपि करशुद्धिकर्या एव विद्याया आद्यं वाग्भवमर्थात्कृत्वा अनयोरेव वाग्भवमायाबीजयोरन्तर्मध्येऽर्थात् तस्या एव आद्याया विद्या-

१ 'मन्तरं तु' ग. पाठः ।

या अन्तं शक्तिबीजं शिवेन हकारेण अन्वितमर्थादुपरिसंबद्धं सत् कुर्यादिति श्रीशङ्कराशिः । एवं ऐंह्सौःह्रीं । एतच्च तत्रैव मध्येऽन्तमितिपाठभेदादुक्तम् । अयमत्र अर्थः—आद्यतृतीययोर्विद्ययोराद्यमेकैकं वर्णं वाग्भवं मायाबीजं च गृहीत्वा अर्थादनयोरेव मध्येऽर्थादेतदीयमेव अन्तं शक्तिबीजेन षाधेन हकारेण ऊर्ध्वेऽर्थात् योजितं सत्कुर्यादिति शेषः । तत्र प्राक्पक्षोपेक्षणं चान्यैरेवं हि श्रीमदीश्वरशिवमतेन यथा इह चक्रासनोद्धारस्तथैव राजानककल्याणवर्मंमतेन न पर्यवसित इति यादृक्तादृक्प्रायन्यायोपन्यासकेन तावदाशयेन कृतम् । न विद्मः एवंहि पर्यवसिते को दोषः स्यात् । वस्तुतो हि अस्य दर्शनस्य एतदेव आचार्यद्वयं कश्मीरेषु अवतारकम् । ततश्च श्रीविश्वावर्तमुखेनैव लक्ष्यते यत्, तदेव इदमस्मत्पर्यन्तं शिष्यप्रशिष्यक्रमेण सर्वेषामपि प्राप्तम् । एवंच तयोराप्तत्वाविशेषात् तन्मतमेव सर्वात्मना प्रमाणम् । ततश्च तुल्यप्रमाणत्वात् तन्मतयोर्विकल्पो न्याय्यः, नतु एकतरपक्षपरित्यागः; प्रत्युत श्रीमदीश्वरशिवाचार्य[1]मतस्य बलवत्त्वं लक्ष्यते यतः स एव श्रीरसमहोदधिश्लोकानां साक्षात्प्रवर्तयितेति सर्वत्र अविगीता प्रसिद्धिः । यत् भवन्तोऽपि

'श्रीशूरमठाधिपतेर्लेभे गुरुवरपरम्परोपनतम् ।
चक्रमिदमीश्वरशिवात्पूर्वाचार्योऽस्मदीय एव पुरा ॥'

इति । एवमाद्यद्वयमन्यादृङ्मध्यममन्तेऽक्षरं चतुर्थ्यां यदि, तदपि अपर्यालोचितार्थाभिधानमेवेति आस्तामेतत् ॥

सर्वमन्त्रासनास्थितां पञ्चमीमपि आह

**पुनराद्यां महाविद्यां शिवचन्द्रसमान्विताम् ॥८९॥**

---

१ 'चार्यतमेन' ग. पाठः ।

कृत्वा कामप्रदा विद्या सर्वमन्त्रासनस्थिता ।

पुनरपि तत्तद्विद्यान्तरोद्धरणभित्तिभूतत्वात् महतीं विद्यामाद्यां करशुद्धिकरीमेव प्रत्यर्णं शिवचन्द्राभ्यां ह–सकाराभ्यां समन्वितां कृत्वा तत्तदभीष्टार्थदायिनी सर्वमन्त्रासनस्थिता विद्या गुरुणा उद्धार्येति शेषः । एवं ह्सैंह्स्क्लींह्स्सौः । तदुक्तं

'षाद्योन्ताभ्यां युता पूर्वा ज्ञेया मन्त्रासनस्थिता ।'

इति । षाद्योन्ताभ्यामिति तद्देशावस्थिताभ्यां हकारसकाराभ्याम् ॥

साध्यसिद्धासनस्थितां षष्ठीमपि आह

देव्यात्मासनविद्यायाः पूर्वोक्ताया यथाक्रमम् ॥६०॥

अन्तदेशे तोयबिन्दुशक्रशक्तीरनुक्रमात् ।

संयोज्य परमेशानि साकमर्धेन्दुना ततः ॥६१॥

केवलाक्षरभेदेन विद्या[2] साध्यासनस्थिता ।

तोयं व, शक्रो ल, शक्तिश्चतुर्थस्वरः ई, एवं व्लीं । ततो यथाक्रमं पूर्वोक्तायास्तृतीयस्या आत्मासनविद्याया अन्ते स्थितस्य शक्तिबीजस्य देशे स्थाने तदपास्य तोयादीननुक्रमात् संयोज्य तस्यैव एकैकस्य पिण्डात्मनोऽक्षरभेदेन सत्यभामाभामेतिवत् साध्यासनस्थिता विद्या उद्धार्येत्यर्थः । एवं ह्रीं क्लीं व्लीं । तदुक्तं

'विपरीतस्थितौ रान्तौ भोर्ध्वऊपूर्वलाञ्छितौ ।
दत्त्वा तृतीयविद्यायाः कामबीजान्तदेशतः ॥
साध्यसिद्धासनगता षष्ठी विद्या प्रकाशिता ।'

इति । रान्तो लो वश्च । विपरीतस्थिताविति वकार

---

[1] 'नादतः' ग. । [2] साध्यसिद्धासन' ग. पाठः ।

ऊर्ध्वमधो लकारश्चेत्यर्थः । झोर्ध्वं ञं, ऊपूर्वं ई, कामबीजान्तदेशतो दत्त्वेति तेन आदौ माया, ततः कामराजस्तत इदमिति ॥

सप्तमीं देव्यावाहनविद्यामपि आह

हंससोमसमारूढामाद्यामग्न्यासनस्थिताम्[1] ॥६२॥
सर्वार्थसाधकी[2] विद्या देव्यावाहनकर्मणि ।

आद्यां करशुद्धिकरीं त्र्यर्णामेव विद्यां प्रत्यर्णं हंससोमसमारूढां अग्न्याहितादिवत् रेफस्य सम्यक्व्यञ्जनापेक्षयैव ऊर्ध्वमवस्थितहकारसकारां सतीमग्न्यासनस्थितामधोऽवस्थितरेफामर्थात् कृत्वा देव्यावाहननिमित्तं सर्वार्थसाधकी इयं विद्या अर्थादुद्धार्येत्यर्थः । एवं ह्स्रैं ह्स्क्लरीं ह्स्रौः । तदुक्तं

'दत्त्वा बीजत्रयस्योर्ध्वं वर्णौ[3] षाधषअन्तगौ ।
यान्तस्था आद्यविद्यैव आवाहनविधौ परा ॥'

इति । षाधोगो ह, षान्तगः स, यान्तो र ॥

एतदुपसंहरन्नन्यदवतारयति

एवमेता महाविद्या देवि सर्वार्थसिद्धिदाः ॥६३॥
महात्रिपुरसुन्दर्या मूलविद्यां शृणु प्रिये ।

आदरातिशयदर्शनार्थं तु पुनः शृणिवत्यस्य उपादानम् ॥

तामेव आह

मादनं तदधः शक्तिस्तदधो बिन्दुमालिनी ॥६४॥
ऐन्द्रमाकाशबीजस्थमधस्ताज्ज्वलनाक्षरम् ।

---

१ 'हंसबीजसमा' ग. । २ 'साधिका' ग. । ३ 'वर्णौ तु षाध' ख. पाठः ।

मायाबिन्द्वीश्वरयुतौ सर्वोपरि नियोजितौ ॥६५॥
अयं स वाग्भवो देवि वागीशत्वप्रवर्तकः ।

मादनं क, शक्तिः ए, बिन्दुमालिनी ई, ऐन्द्रं ल, आकाशबीजं ह, ज्वलनाक्षरं र, माया ई, बिन्द्वीश्वरेत्यनेन अधिष्ठेयाधिष्ठातृमुखेन समस्तमान्त्रप्रमेयासूत्रणं कटाक्षितम् । एवं कएईलह्रीं ॥

एवं वाग्भवमभिधाय कामराजमपि उद्धरति

शिवबीजं त्रिधा युङ्क्त्वा सृष्टिस्थितिलयक्रमैः ॥६६॥
द्वयमाद्येन रहितमाद्याधो मदनाक्षरम् ।
पुनः स्थितिशिवाधस्तादिन्द्रबीजं नियोजयेत् ॥६७॥
तथा लयशिवाधोऽपि ज्वलनं च महेश्वरि ।
चतुर्थस्वरसंयुक्तं बिन्दुखण्डेन्दुलङ्कृतम् ॥६८॥
एवमेतन्महाबीजं कामराजं महोदयम् ।

शिवबीजं ह, युंक्त्वेति संयोज्य विन्यस्येत्यर्थः । नच एतदन्तरालयोर्द्वयस्येष्टैर्नैरन्तर्येण न्यस्तव्यमित्याह द्वयमाद्येन रहितमिति स्थितिलयात्मकं द्वयमाद्येन स्थित्यात्मकेन रहितमसंश्लिष्टमेव कार्यं येन अन्तरा वक्ष्यमाणस्य वर्णद्वयस्य अवकाशः स्यात् । अत एव आह आद्याधो मदनाक्षरमिति, स्थितिशिवाधस्तादिन्द्रबीजमिति च, मदनाक्षरं क, इन्द्रबीजं ल, ज्वलनं र, चतुर्थस्वरः ई, एवं ह्कह्लह्रीं । आद्येन शिरोरेखात्मकेन आकारेण रहितमिति तु न वाच्यम् । एवं हि द्वयस्य शिरोरहितत्वमेकस्य च सशिरस्कत्वमिति केन अभिप्रायेण उक्तमिति न जानीमः ।

---

१ 'तं' ग. । २ 'जितं' ग. पाठः । ३ 'कृत्वा' ग. । ४ 'क्रमात्' ग. । ५ 'नार्यो' ग. पाठः ।

वस्तुतो हि सर्वेषामेव पिण्डवर्णानामनच्कत्वमेव न्याय्यं यत्र कुत्रचिदेकेनैव येन केनचिदचा साच्कत्वेष्टेः, न केवलमिहैव अनेन एवमपव्याख्यानं कृतं; यावदनयैव सरण्या

'...... ..........केचिन्नष्टैस्तु नाशिताः ।'

इतिभङ्ग्या श्रीमदानन्देश्वरकल्पे

'शिवं शक्तिम्................................ ।'

इत्यादिकोऽपि मन्त्रग्रन्थो नाशित इति किमेषामदृष्टगुरूणां स्वयम्भुवामुच्यते, यैर्महागुरूदितां प्रकृतां राजपथायमानां प्रक्रियामपहाय किंचित् यत्तत्प्रायमुक्तमिति आस्तां प्रस्तुतवस्तुव्याक्षेपकारि ग्रन्थान्तरपर्यालोचनमपि एतत् ॥

एवं कामराजबीजमुद्धृत्य शक्तिबीजमपि अभिधत्ते

मायाबीजं महेशानि मादनं शक्रसंयुतम् ॥९९॥

चन्द्रबीजं केवलं तु विनियोज्यं[1] वरानने ।

मायाबीजं ह्रीं, मादनं क, शक्रो ल, चन्द्रबीजं स, केवलं ह ॥

कथंच एषां विनियोजनं कार्यमित्याह

त्यक्त्वा सृष्टिक्रमं देवि प्रागुच्चार[2]क्रमेण तु ॥१००॥

संहारक्रमयोगेन शक्तिबीजं समुद्धरेत् ।

मादनशक्रबीजयोस्तु विशेषणविशेष्यभावेनैव [3]संहारानुक्रमो व्यत्ययो दर्शितः । उच्चारस्तु सृष्टिक्रमेणैव कार्य इत्याह प्रागुच्चारक्रमेणेति । अत एव तुशब्दो व्यतिरेके । एवं ह्स्क्ल्ह्रीं ॥

तदेव उपसंहरति

एवमेषा महाविद्या महात्रिपुरसुन्दरी ॥१०१॥

---

१ 'ज्य' ग. । २ 'उद्धार' ग. । ३ 'संहारक्रमव्यत्ययो' ख. पाठः ।

संस्मृतैव महादेवि[1] त्रैलोक्यवशकारिणी ।

यदुक्तं

'अः-क्षमध्यगतं गृह्य लृ-ऐमध्यमतः कुरु ।
तस्य मध्ये न्यसेत्पश्चाद्ःकारोर्ध्वव्यवस्थितम् ॥
रान्तषान्तयकारान्तमायाबिन्दुनिरोधियुक् ।
वाग्भवोऽयं समाख्यातः सम्यक्प्रत्ययकारकः ॥
त्रयाणां षाधवर्णानामेकैकस्यासने न्यसेत् ।
गाद्यसोर्ध्वयकारान्तावेकत्राद्यर्णलाञ्छितम् ॥
कामबीजं महेशानि सरहस्यं प्रकाशितम् ।
अस्योच्चारणमात्रेण जगत्क्षोभः प्रजायते ॥
तृतीयं संप्रवक्ष्यामि शक्तिबीजं महाद्भुतम् ।
षाधं लाधसमायुक्तं गाद्यं फाधं षपाधगम् ॥
अःपृष्ठं झोर्ध्वसंयुक्तं शक्तिबीजं समुद्धृतम् ।
अनेन ज्ञातमात्रेण कुर्यात्सर्वविपत्क्षयम् ॥
एषा विद्या समाख्याता सर्वाश्चर्यकरी परा ।
अनया ज्ञातया सम्यङ्नास्ति तद्यन्न साधयेत् ॥'

इति । अः-क्षमध्यं क, लृ-ऐमध्यं ए, अःकारोर्ध्वं ई, रान्तं ल, षाधो ह, यकारान्तं र, माया ईं, एवं वाग्भवः । षाधवर्णानां हकाराणां गाद्यं बह्निपुरस्थित्यपेक्षया क, सोर्ध्वं ल, यकारान्तो र, आदिर्विश्वकारणत्वान्माया, तद्वर्णः ई । यद्वा आ आकार आदिः पूर्वो यस्यासाविति कामराजः । षाधो ह, लाधः स, गाद्यं क, फाधो ल, षाधोगं ह, पाधोगं र, अःपृष्ठं ई, झोर्ध्वं ं, एवं शक्तिबीजम् । न च अत्र स्फुटेऽपि सप्तात्मत्वे नवात्मत्वं वाच्यं, एवं निरो-

[1] 'महेशानि' ग. पाठः ।

धिन्याद्यपेक्षया दशात्मत्वादि अपि किं न उच्यते तस्या अपि मन्त्रप्रमेयतायामविशेषात् । श्रीरसमहोदधावपि

'अस्ति हि निरोधिन्या वचनं बिन्दुनिरोधियुक् ।'

इति । यत्तु श्रीमदल्लटेन अपि अङ्गन्यासविद्यायां[१] किं त्वादेर्वाग्भवबीजस्य अन्ते तत्परमिति कामराजपरं शंकरराशेर्मतमिदमिति ज्ञात्वा अपि पक्षान्तरोदङ्कनं तृतीयपञ्चमसप्तमविद्यानामुद्धारे करशुद्धिविद्यामपहाय द्वितीयतृतीयपञ्चमीनां परामर्शे

'केवलमिति शिवबीजं तद्द्वयं शक्तिबीजमन्त्यं च ।
विद्याया अस्या अपि संभेदस्तस्य यस्त्रिविधः ॥
केवलवाग्भवपूर्वैस्त्रिभिः स्वरैः प्रथमकथितविद्यावत् ।
तेन समस्ततयान्यत्रयरचक्रे श्रीत्रिपिण्डेन ॥
तेन शिवेन्दुस्मरहरिशिवदहनैर्वाक्तुरीयशूलयुतैः ।
एकैकबिन्दुतत्सहितैरियमष्टमी विद्या ॥'

इति विद्यान्तरपरिकल्पनं च श्रीमत्स्वगुर्वनभिमतमपि स्वोत्प्रेक्षितं कृत्वा

'द्वित्र्यर्णविपर्ययतोऽपीन्द्वक्षरतो द्वितीयस्याः ।
पञ्चमसप्तमयोरप्युद्धृतमिह शक्तिबीजं यैः ॥
ते बीजवर्णकीलनमात्रमपि प्रायशोऽत्र मन्त्राणाम् ।
अविदन्तो गर्जन्ति च केन महिम्नेति चित्रमिदम् ॥
इति चतुरन्वयसन्ततिभेदेनायं समस्तविद्यानाम् ।
इह निगदित उद्धारस्तच्छासनं गुरुमुखप्राप्यम् ॥'

इति

'बहुविधसंततिभेदैर्यद्यपि गुरुभिर्ममेदमादिष्टम् ।
चतुरन्वयसन्ततिरिह तथापि मुख्यैव युक्तियुता ॥'

---

१ 'विद्यायाः' ख. पाठान्तरम् ।

इत्यादि च उक्तम्, तत् सर्वमेवमुपेद्यमुक्तनीत्या सर्व-प्रकारं सामञ्जस्याभावात् । यत्पुनरत्र अक्षरश्लिष्टतामात्रमेव आलम्ब्य आलजालप्रायमस्खलितापर्यवसितसंवित्क्रमादिकं निर्निबन्धनमल्पश्रुततातिप्रियं मन्त्रादौ व्याप्त्यादि उद्दर्शितं, तत्र न अस्माभिर्विद्वद्भ्योऽसूयितव्यम् । यत्किमिति, न तत् प्रातिपद्येन अनूद्य दूषितमिति यत् मूलत एव आगमार्थ-प्रकाशनेऽपि अकर्तव्ये कथं नाम सुप्रकटं परं प्रायश्चि-त्तावहं मन्त्रार्थप्रकाशनमपि क्रियमाणं क्षमन्ते महात्मानः समयभीरवो महाजनाः । यतोऽद्य यतः कुतश्चन अस्थाना-दनयेन अन्ततश्चौर्यादिना अपि आसादितखण्डितप-त्रिकामात्राः सर्व एव यथास्थितं गुर्वादि परिवर्त्य, तत्र आज्ञामपि स्वपित्रादि च गुरुतया परिकल्प्य शास्त्रार्था-नुष्ठानपराङ्मुखा मन्त्रविक्रयमात्रतात्पर्या धनसंग्रहणपराय-णाः सकलं लोकं विप्लावयन्तो दृश्यन्ते । शास्त्रार्थविच्छे-दभीरुतया तु परमत्यल्पं तात्पर्यालोचनमात्रं कृतमिति अलं खलजनशिरोर्तिकारिणा अमुनापि वचनेन ॥

एवंमाहात्म्यवत्त्वेऽपि अनया किं कार्यमित्याह

एतयैतस्य चक्रस्य साधकोऽर्चनमारभेत् ॥१०२॥

सच कीदृगित्याह

कुङ्कुमारुणदेहस्तु वस्त्रारुणविभूषितः ।
ताम्बूलपूरितमुखो धूपामोदसुगन्धितः* ॥१०३॥
कर्पूरचोदादिग्धाङ्गो रक्ताभरणमण्डितः ।
रक्तपुष्पावृतो मौनी रक्तगन्धानुलेपनः ॥१०४॥

---

१ 'रक्तवस्त्रादिसंयुतः' ग. । * नः नंचदितरादम इति व्याकुलाक्षरेषु ग. पाठः ।

रक्तासनोपविष्टस्तु लाक्षारुणगृहस्थितिः[1][2] ।
सर्वशृङ्गारवेशाढ्यास्त्रिपुरीकृतविग्रहः ॥१०५॥
मनःसंकल्परक्तो[3] वा साधकः स्थिरमानसः ।

वस्त्रारुणेति पूर्वनिपातव्यत्ययः । रक्तगन्धेति हरिचन्दनालक्तकादि । साधक इति सिद्धिसाधनाय सततोद्युक्तः, अत एव उक्तं स्थिरमानस इति । रक्तोपचारस्य च अत्र अवश्योपयोगित्वमेव द्योतयितुमुक्तं मनःसंकल्परक्तो वेति । एवं बाह्यद्रव्याभावेऽपि न नित्यादौ काचित् खण्डनेत्यपि अनेन आवेदितं तत्र यथासंभवं प्रवृत्तेर्भावात्, काम्यादावेव हि यथा[4]सम्भवं न भवेदिति भावः । अयं पुनरत्र तात्पर्यार्थो यत् साधकस्य येन केनचिदात्मनि परानन्दचमत्कारतारतम्यमयत्वाविर्भावो भवेत्, तदेव सर्वात्मना द्रव्यजातं संभरणीयमिति । यदाहुः

'यत्किञ्चिन्मानसाह्लादि यच्च सौभाग्यवर्धनम् ।
तेनात्मानमलङ्कृत्य देवमभ्यर्चयेत्सदा ॥'

इति ॥

एतच्चक्रं कुत्र कथं कीदृक् च कार्यमित्याह

भूप्रदेशे समे शुद्धे गोमयेनोपलेपिते ॥१०६॥
पुष्पप्रकरसंकीर्णे धूपामोदसुगन्धिते ।
सिन्दूररजसा देवि कुङ्कुमेनाथवा पुनः ॥१०७॥
आलिखेत्प्रथमं चक्रं समरेखं मनोरमम्[5] ।

---

१ 'रक्तास्तरो' ग. । २ 'स्थितः' ग. पाठः । ३ 'रक्तं वा' ख. । ४ 'यदा' ख. । ५ 'मनोहरम्' ग पाठः ।

समत्रिकोणशक्त्यग्रं सश्रीकमतिसुन्दरम् ॥१०८॥ *

सश्रीकत्वमेव प्रपञ्चितमतिसुन्दरमिति । तत्र च समरेख-त्वादिविशेषणद्वारको हेतुः । इह तावत् साधकस्य तत्तदु-पास्यमन्त्रदेवतातादात्म्यावष्टम्भभावनं विना न किञ्चिदपि पूजादि सिद्ध्येदिति अनन्तरमेव उक्तं 'त्रिपुरीकृतविग्रहः' इति ॥१०८॥

तच्च कथं स्यादित्याह

ध्यात्वा पुरत्रयं देवि बीजत्रयसमन्वितम् ।
सर्वाद्यविद्यया देवि करशुद्धिं तु कारयेत् ॥१०९॥

पुरत्रयं गुह्यहृद्भ्रूमध्यलक्षणं, नतु वाङ्मनःकायरूपं, बीजत्रयसमन्वितं ध्यात्वा तत्र मूलविद्यासंबन्धि बीजत्रयं न्यस्येदिति यावत् । यत् वक्ष्यति

'नाभिमण्डलहृत्पद्ममुखमण्डलमध्यगा ।' (४।५१)

इति । अस्मत्परमगुरवोऽपि

'गुह्ये हृदि भ्रुवोर्मध्ये न्यस्येन्मूलाक्षरत्रयम् ।'

इति । पाठक्रमादर्थक्रमो बलीयानिति समनन्तरवक्ष्यमाण-न्यासानन्तरमेतन्न्यास इति गुरवः । नतु वाच्यमत्र अस्त्र-मन्त्रस्यौचित्यात् विघ्नव्युदासाय यागवेश्मनि ऊर्ध्वमध्याधो-भागात्मके पुरत्रये बीजत्रयमेतत् ध्यायेदिति ॥१०९॥

एवं करशुद्धौ कृतायां तत्करणको मन्त्रान्तरन्यासो न्या-य्य इत्याह

---

१ समास्त्रं चातिसुन्दरम्' ग. पाठः । * 'हेमादिपात्रे साधारे स्थापये-दर्घ्यमम्बुना । रोचनाचन्द्रकाश्मीरलघुकस्तूरिकायुतम् ॥ भावयेद्वह्निसु-र्येन्दुभूतानि परमेश्वरि । जपेच्च दशवारं तत्तर्पयेत्तेन योगिनीः ॥ इति ग. पु० अधिकः पाठः ।

तत आत्मासनं दद्याच्चक्रासनमथेश्वरि ।
सर्वमन्त्रासनं देवि साध्यसिद्धासनं तथा ॥११०॥

आत्मासनं समाख्याबलादेव आत्मनि आसनत्वेन वि-न्यस्य चक्रासनादीनां गुह्यकन्दहृद्रूपस्थाननैयत्ये प्रमाणाभा-वात् सर्वशरीरगतत्वेनैव न्यासो न्याय्यस्तस्य तत्तदासन-रूपतायामौचित्यात् । बहिः पुनरेषामग्रदक्षेतरपार्श्वनिश्चये प्रमाणाभावात् समाख्याबलोपनतः स्थाननियमोऽवश्यग्राह्यो-ऽन्यथाहि अपरिनिष्ठितं पूजनं स्यात् । यदुक्तं मयैव

'अथ मन्त्रासनमन्तश्चतुरश्रद्वारमध्यमाश्रित्य ।
चक्रासनमाद्योदितशक्त्यग्रगतं त्र्यस्रस्य मध्ये च ॥
साध्यासनम्.............................. ।'

इति ॥११०॥

तथा

ततो रक्षां प्रकुर्वीत पूर्वोक्तकुलविद्यया ।
षडङ्गन्यासयोगेन नमस्कार[1]नियुक्तया ॥१११॥

नच अत्र अङ्गेषु शास्त्रान्तरोक्तवत् जात्यन्तरप्रयोगोऽपि कार्य इति उक्तं नमस्कारनियुक्तयेति । सर्वशेषत्वेन पुनरे-तत् व्याख्यानमुपेत्यमेव कुलदर्शनत्वान्यथानुपपत्त्या वैनयि-कप्रक्रिया उचिता इह उपपत्तेः ॥ १११ ॥

ततोऽपि

शि[2]खाललाटभ्रूमध्यकण्ठहृन्नाभिगोचरे ।
आधारेऽप्यू[3]हकं यावन्न्यासमष्टभिराचरेत् ॥११२॥

ऊहकमित्यनेन तदुद्राधिष्ठितः पादो लक्ष्यते । अष्टभि-

१ 'रादियुक्तया' ग. । २ शिरो' ग. पाठः । ३ 'व्यूहकं' ग. पाठः ।

रिति वशिन्यादिबीजैर्नतु चक्रैस्तेषां नवसंख्यत्वात् तत्तत्परामृश्यत्वायोगात् । एतावतैवच अस्य सिद्धः स्वात्मनि त्रिपुरीभावः इति ।

'वाग्भवं दक्षिणे नेत्रे कामराजं च वामतः ।
ललाटे शक्तिबीजं च कर्णयोर्दक्षवामयोः ॥
वक्त्रमध्ये च तान्येव भुजयोर्हृदये ततः ।
जङ्घयोर्नाभिमध्ये च मन्त्रन्यासमिति क्रमात् ॥
विधाय चक्रविन्यासमपि चास्त्रं विदारयेत् ।
मुण्डव्योमनि तत्राद्यं बैन्दवं चक्रनायकम् ॥
त्र्यरं शिखायामष्टारं भाले भ्रूमध्यदेशतः ।
दशारं तद्द्वितीयं च कण्ठे तदनु विन्यसेत् ॥
चतुर्दशारं हृदये नाभावष्टदलं ततः ।
आधारे षोडशदलं द्वारचक्रं तु पादयोः ॥
पाशाङ्कुशौ वामदक्षकरयोर्धनुषी भ्रुवोः ।
नासायां विशिखांश्चेति चक्रमप्यान्तरालिकम् ॥'

इत्यादि अवान्तरमनपेक्षितमपि स्वोत्प्रेक्षितं न किंचिदपेक्षणीयमपेक्षाया एव अभावात् । सत्यां हि तस्यां शास्त्रान्तरात् तावदपेक्षणीयं यावदपेक्षाया निवृत्तिः स्यात् । तदभावे पुनर्निर्निबन्धनमेव । शास्त्रान्तरोक्तस्यापेक्षणीयत्वे सर्वस्यैव तत्प्रसङ्गादनवस्थितमेव शास्त्रान्तरानुष्ठानं स्यात् । यदुक्तं

'नच शास्त्रान्तरे कर्तुं युक्तं शास्त्रान्तरश्रुतम् ।
शास्त्रस्यान्यानपेक्षत्वात्पुंबुद्धिप्रभवं हि तत् ॥
सापेक्षत्वेऽप्यपेक्षैव मानं यावदपेक्षते ।
तावदेवान्यतः कार्यं नान्यत्स्यादनवस्थितेः ॥'

इति । तस्मात् तत्तद्देशान्तरवरगुरूपपादितोपदेश्यत्वेऽपि अनुपदेश्यान्प्रति प्रतिपदं किमुच्यते इति आस्ताम् ॥ ११२ ॥

एवं त्रिपुरीकृतविग्रहः साधकः स्वात्मपूजापुरःसरं बहिर्मण्डलादावस्मत्पूर्वगुर्वादिष्टदृष्ट्या द्वारेशदिव्याद्योघत्रयभिन्नगुर्वादिपूजां कृत्वा निखिलचक्रसपर्यासंपत्त्यर्थं प्रथमं तावत् प्राधान्यात् देव्या एव आवाहनादि कुर्यादित्याह

ततः पद्मनिभां देवीं बालार्ककिरणारुणाम् ।
जपाकुसुमसङ्काशां दाडिमीकुसुमोपमाम् ॥११३॥
पद्मरागप्रतीकाशां कुङ्कुमोदकसंनिभाम् ।
स्फुरन्मुकुटमाणिक्यकिङ्किणीजालमण्डिताम् ॥११४॥
कालालिकुलसंकाशकु[1]टिलालकपल्लवाम् ।
प्रत्यग्रारुणसंकाशवदनाम्भोजमण्डलाम् ॥११५॥
किंचिदर्धेन्दुकुटिलललाटमृदुपट्टिकाम् ।
पिनाकि[2]धनुराकारसुभ्रु[3]वं परमेश्वरीम् ॥११६॥
आनन्दमुदितोल्लोललीलान्दोलितलोचनाम् ।
स्फुरन्मयूखसंघातविर्त[4]तस्वर्णकुण्डलाम् ॥११७॥
सुगण्डमण्डलाभोगजितेन्द्वमृतमण्डलाम् ।
विश्वकर्मादिनिर्माणसूत्रसु[5]स्पष्टनासिकाम् ॥११८॥
ताम्रविद्रुमबिम्बाभरक्तोष्ठीममृतोपमाम् ।
स्मितमाधुर्यविजितमाधुर्यरसगो[6]चराम् ॥११९॥
अनौपम्यगुणोपेतचिबुकोद्देशशोभिताम् ।

---

१ ‘कुरला’ ग. । कुरलैः संकुचिताग्रैरित्यर्थः । २ ‘पिनाक’ ग. । ३ ‘भ्रूलतां’ ग. । ४ ‘विलसद्धेमकुण्डलाम्’ ग. । ५ ‘विस्पष्ट’ ग. । ६ ‘सागराम्’ । दाडिमीबीजवज्राभदन्तपंक्तिविराजिताम् । रत्नबीजजगन्द्वासिजिह्वामलसभाषिणीम् ग. पाठः ।

कम्बुग्रीवां विशालाक्षीं[1] मृणालललितैर्भुजैः ॥१२०॥
रक्तोत्पलसमाकार[2]सुकुमारकराम्बुजाम् ।
कराम्बुजनखद्योत[3]वितानितनभस्तलाम् ॥१२१॥
मुक्ताहारलतोपेतसमुन्नतपयोधराम् ।
त्रिवलीवलनायुक्तमध्यदेशसुशोभिताम् ॥१२२॥
लावण्यसरिदावर्ताकारनाभिविभूषिताम् ।
अनर्घ[4]रत्नघटितकाञ्चीयुक्तनितम्बिनीम् ॥१२३॥
नितम्बबिम्बाद्विरदरोमराज्य[5]पराङ्कुशाम् ।
कदलीललितस्तम्भसुकुमारोरुमीश्वरीम्[6] ॥१२४॥
लावण्यकदलीतुल्यजङ्घायुगलमण्डिताम् । *
नमद्ब्रह्मशिरोरत्ननिर्घृष्टचरणाम्बुजाम् ॥१२५॥
शीतांशुशतसंकाशकान्तिसन्तानहासिनीम् ।
लौहित्यजितसिन्दूरजपादाडिमरागिणीम् ॥१२६॥
रक्तवस्त्रपरीधानां पाशाङ्कुशकरोद्यताम् ।
रक्तपद्मनिविष्टां तु रक्ताभरणमण्डिताम् ॥१२७॥
चतुर्भुजां त्रिनेत्रां[7] तु पञ्चबाणधनुर्धराम् ।
कर्पूरशकलोन्मिश्रताम्बूलापूरिताननाम् ॥१२८॥*
महामृगमदोद्दामकुङ्कुमारुणविग्रहाम् ।

---

१ 'महादेवीं' ग. । २ 'दला' ग. । ३ 'ज्योत्स्ना' ग. । ४ 'र्घ्ये' ग. । ५ 'जिवरा' ग. । ६ मीश्वरीं । माणिक्यमुकुटाकारजानुद्वयविराजिताम्' ग. । * गूढगुल्फपदद्वन्द्वां प्रपदाजितकच्छपाम । तनुदीर्घाङ्गुलीभास्वन्नखचन्द्रविराजिताम् ॥ ग. पाठः । ७ 'त्रिनयनां' ग. पाठः । * 'करण्डवाहिनेन्द्रेण दत्तताम्बूलपत्रिकाम' ग. अधिकः पाठः ।

सर्वशृङ्गारवेशाढ्यां सर्वालङ्कारभूषिताम् ॥१२९॥
जगदाह्लादजननीं जगद्रञ्जनकारिकाम् ।
जगदाकर्षणकरीं जगत्कारणरूपिणीम् ॥१३०॥
सर्वमन्त्रमयीं देवीं सर्वसौभाग्यसुन्दरीम् ।
सर्वलक्ष्मीमयीं नित्यां परमानन्दनन्दिताम् ॥१३१॥
महात्रिपुरमुद्रां तु स्मृत्वावाहनरूपया ।
विद्ययावाह्य सुभगे नमस्कारैर्नियुक्तया ॥१३२॥
पूर्वोक्तया साधकेन्द्रो महात्रिपुरसुन्दरीम् ।
चक्रमध्ये तु संचिन्त्य................ ॥

क्षणं तत्पर एव तिष्ठेदिति शेषः । माधुर्येति रामणीयकं माधुर्यरूपश्च असौ रस इति । भुजैरिति उपलक्षिताम् । जगत आह्लादकत्वादेव अन्यत्र जगदानन्दशब्दवाच्यस्य परस्य तत्त्वस्य अभिव्यञ्जिकाम् । सर्वसौभाग्यसुन्दरीमिति सर्वलक्ष्मीमयीमिति च विशेषणद्वयेन समस्तविशेषणार्थः संगृहीतः । एवं मुख्यदेव्या एव ध्यानवचनादन्यासामपि ईदृगेव ध्यानमिति अर्थसिद्धं तत्स्फाररूपत्वादासाम् । यत् रसमहोदधिः

'वाचामगोचरं देव्याः सर्वानन्दमयं पुनः ।
एकवक्त्रं महारक्तं रक्तपद्मासनास्थितम् ॥
चतुर्भिरायुधैर्युक्तं पाशाङ्कुशधनुःशरैः ।
देवीकरणरूपं तु शुद्धं शक्तिगणं स्मरेत् ॥
ध्यानं न विद्यते तासामतोऽर्थाद्वरवर्णिनि ।'

इति । ध्यानं न विद्यते इति अत उक्तात् ध्यानादन्यदि-

१ 'वर्धिनीं' ख. । २ 'रादियुक्तया' ग. पाठः ।

त्यर्थः । ननु मूलत एव तन्निषेधो विवक्षितः सर्वानन्द-मयत्वेन वागगोचराया अपि मुख्यदेव्या ध्यानस्य संभवे तत्स्फाररूपाणामन्यासां तदुपपत्तेः । महात्रिपुरमुद्रामिति आवाहनविद्यादिशब्दसंनिधेस्त्रिखण्डाम् । यत् वक्ष्यति

'त्रिखण्डैषा महामुद्रा त्रिपुराह्वानकर्मणि ।' (३।४)

इति । नमस्कारनियुक्तयेति आवाहनानौचित्यात् ॥

..................ततः पूजनमारभेत् ॥१३३॥

ननु अमन्त्रका तावत् पूजा न स्यात्, उक्ताश्च एते विनियुक्ताः; तत् कतरेण इदानीं पूजनं क्रियते इत्याह

शिवाग्निबिन्दवो देवि दिनकृद्वह्निबिन्दवः ।
युगपत्क्रमरूपेण योजनीया महेश्वरि ॥१३४॥
मायार्धेन्दुसमायुक्तं बीजयुग्मं यदुत्थितम् ।
मायालक्ष्मीमयं तेन पूज्यास्तत्राष्ट मातरः ॥१३५॥*

शिवो ह, अग्नी र, दिनकृत् श, वह्नी र, माया ई, एवं ह्रीं श्रीं ॥
ताश्च काः कुत्र पूज्या इत्याह

ब्रह्माणी पश्चिमद्वारे माहेश्वर्यपि चोत्तरे ।

---

१ 'कला' ग. । २ 'यावत्पूज्यास्तु मातरः' ग. । * त्रिपुरा त्रिपुरेशी च सुन्दरी पुरवासिनी । श्रीर्मालिनी च सिद्धाम्बा महात्रिपुरसुन्दरी ॥ प्रकटाश्च तथा गुप्तास्तथा गुप्ततराः पराः । नवधा चक्रयोगिन्यो नामभिस्ताः समर्चयेत् ॥ अणिमां पश्चिमद्वारे लघिमामपि चोत्तरे । पूर्वद्वारे तु महिमामीशित्वाख्यां तु दक्षिणे ॥ वशित्वाख्यां तु वायव्ये प्राकाम्यामीशदेशके । भुक्तिसिद्धिं तथाग्नेय्यामिच्छासिद्धिं तु नैर्ऋते ॥ अधस्तात्प्राप्तिसिद्धिं तु सर्वकामां तथोर्ध्वतः । एवमेता महादेव्यो देवि सर्वार्थसिद्धिदाः ॥ मातर इत्यनन्तरं ग. पुस्तके अधिकः पाठः ।

पूर्वे चैवं तथेन्द्राणी कौमारी दक्षिणे तथा ॥१३६॥
वैष्णव्यपि च वायव्ये वाराहीमीशदिग्गताम् ।
चामुण्डां देवि चाग्नेये महालक्ष्मीं तु नैर्ऋते ॥१३७॥

प्रथमान्ता पूज्येति संबन्धनीया, द्वितीयान्तां पूजयेदिति ।

'तत्र प्रकटयोगिन्यश्चक्रे त्रैलोक्यमोहने' ।

'अणिमाद्या महादेवि सिद्धयोऽष्टौ व्यवस्थिताः
॥' (यो० हृ० ३।११८)

इत्यादिना ब्राह्म्यादय एव तत्कारित्वादणिमादित्वेन व्यपदिष्टा इति न कश्चिद्विरोधः । आसां चक्रेश्वरीत्वेन तत्रैव

'तत्रादिभेदे त्रिपुरा.................. ।'(यो० हृ० २।६)

इति श्रीत्रिपुराख्याया देव्याः पूजितत्वमुक्तं, चक्रेश्वर्याश्च प्रतिचक्रं पार्श्वद्वये

'मुद्रा यास्त्रिपुरायास्तु देवि सिद्ध्यष्टकान्विताः ।
ता एव सर्वचक्रेषु पूजाकाले प्रपूजयेत् ॥' (४।६५)

इतिवक्ष्यमाणदशा एकैकसिद्धिसहितामेकामेकां मुद्रां पूजयेत् । तद्यथा इह संक्षोभिणी मुद्रा अणिमा च सिद्धिरिति । एतच्च त्रयं प्रतिचक्रमग्र एव पूज्यमिति गुरवः ॥१३७॥

एवं प्रथमं त्रैलोक्यमोहनं चक्रमभिधाय द्वितीयं सर्वाशापरिपूरणं चक्रमपि आह

कामाकर्षण[2]रूपा च बुद्ध्याकर्षस्वरूपिणी ।
अहङ्काराकर्षिणी च शब्दाकर्षस्व[3]रूपिणी ॥१३८॥

---

१ 'पूर्वद्वारे तु कौमारीं दक्षिणे वैष्णवीमपि । वाराहीमपि वायव्ये तथैन्द्रीमीशदेशके ॥ चामुण्डामपि चाग्नेये महालक्ष्मीं च नैर्ऋते । मातरष्टौ महेशानि पूजयेत्सर्वकामदाः ॥' ग. पाठान्तरम् । २ 'कर्षणरूपिणी' ग. । ३ 'णरूपिणी' ग. पाठः ।

स्पर्शाकर्षणरूपा च रूपाकर्षणकारिणी ।
रसाकर्षकरी देवी गन्धाकर्षकरी तथा ॥१३९॥
चित्ताकर्षणरूपा च धैर्याकर्षस्वरूपिणी[1] ।
स्मृत्याकर्षणरूपा च नामाकर्षणकारिणी ॥१४०॥
बीजाकर्षणरूपान्या आत्माकर्षस्वरूपिणी[2] ।
अमृतस्याकर्षणी[3] च शरीराकर्षणी परा ॥१४१॥

एवं

षोडशारे महादेवि वाममार्गेण[4] पूजयेत् ।
मायालक्ष्मीकलाभिस्तु कलाषोडशकं त्विदम् ॥१४२॥

वाममार्गेणेति साधकस्य, देव्यास्तु दक्षिणेनेति अर्थसिद्धम् । यद्वक्ष्यति

'वाममार्गक्रमेणैव पश्चिमादेव दक्षिणम् ।
गृहीत्वा.................................. ॥' (१ । १४८)

इति । एकः कलाशब्दः स्वरवाचकः, द्वितीयस्तु शक्तीनाम् । चक्रेश्वरी च अत्र त्रिपुरीश्वरीति उक्ता । यदागमः

'तथैव गुप्तयोगिन्यः सर्वाशापरिपूरणे ।
कामाकर्षणरूपाद्या देवताः परिकीर्तिताः ॥'

इति ,

'................द्वितीये त्रिपुरीश्वरी ! '

इति च ॥ १४२ ॥

सर्वसंक्षोभकारकाख्यं तृतीयं चक्रमपि आह

अनङ्गकुसुमां पूर्वे दक्षिणेऽनङ्गमेखलाम्[5] ।

---

१ 'णी' ग. । २ 'तथात्माकर्षिणी परा' ग. । ३ 'ताकर्षिणी देवी' ग. ।
४ 'वामावर्तेन' ग. । ५ 'मेखलां' ग. पाठः ।

पश्चिमेऽनङ्गमथनामुत्तरे मदनोत्तराम्[2] ॥१४३॥
अनङ्गलेखामाग्नेये नैर्ऋतेऽनङ्गवासिनीम्[3] ।
अनङ्गाङ्कुशां वायव्य ईशानेऽनङ्गमालिनीम्[4] ॥१४४॥

इह आद्ये चक्रे पूर्वपश्चिमादिक्रमस्य अन्यनैरपेक्ष्येण उक्तेः प्राजापत्य एव दिक्क्रमो ग्राह्यः,

'अनङ्गकुसुमाद्याश्च द्वारदेवीव्यवस्थया ।'

इत्यादि तु श्रुतिविरुद्धत्वादुपेक्ष्यमेव । चक्रेश्वरी च अत्र त्रिपुरसुन्दरी । यदुक्तं

'गुप्तगुप्ततरा देवि सर्वसंक्षोभकारके ।
अनङ्गकुसुमाद्याश्च चक्रे देव्या व्यवस्थिताः ॥'

इति,

'..............तृतीये त्रिपुरसुन्दरी ।'

इति च ॥ १४४ ॥

सर्वसौभाग्यकारकाख्यं चतुर्थमपि आह

सर्वसंक्षोभिणी शक्तिः सर्वविद्रावणी तथा ।
सर्वाकर्षकरी[5] चान्या सर्वाह्लादकरी तथा ॥१४५॥
सर्वसंमोहनी शक्तिः सर्वस्तम्भनरूपिणी[6] ।
सर्वजम्भनरूपा तु सर्वतो वशकारिणी[7] ॥१४६॥
सर्वरञ्जनशक्तिश्च सर्वोन्मादस्वरूपिणी[8] ।
सर्वार्थसाधकी[9] शक्तिः सर्वाशापरिपूरकी ॥१४७॥
सर्वमन्त्रमयी देवी सर्वद्वन्द्वक्षयङ्करी ।

---

१ 'मदनां' ग. । २ 'मदनातुरां' ग. । ३ 'वेगिनीम्' ग. । ४ 'अष्टपत्रे महापद्मवेष्टिते परिपूजयेत्' ग. अधिकः । ५ कर्षणशक्तिश्च सर्वाह्लादनकारिणी' ग. । ६ 'कारिणी' ग. । ७ 'शक्तिश्च तथा सर्ववशंकरी' ग. । ८ 'न' ग. । ९ 'साधनी शक्तिः सर्वसंपत्तिपूरिणी' ग. पाठः ।

एवं

वामावर्तक्रमेणैव पश्चिमादेव दक्षिणम् ॥१४८॥
गृहीत्वा पूजयेदेता देवीस्त्रिभुवनेश्वरीः ।

पश्चिमादिति देव्यग्रत आरभ्येत्यर्थः । गृहीत्वेति अवधित्वेन । चक्रेश्वरी च अत्र त्रिपुरवासिनी । तदुक्तं

'संप्रदायक्रमायाताश्चक्रे सौभाग्यकारके ।
सर्वसंक्षोभिणीपूर्वाः संस्थिताः सुरसुन्दरि ॥'

इति,

'...................चतुर्थे त्रिपुरवासिनी ।'

इति च ॥

सर्वार्थसाधकाख्यं पञ्चममपि आह

सर्वसिद्धिप्रदा शक्तिः[1] सर्वसंपत्प्रदा तथा ॥१४९॥
सर्वप्रियङ्करी चापि सर्वमङ्गलकारिणी ।
सर्वकामप्रदा देवी सर्वदुः[2]खविमोचिनी ॥१५०॥
सर्वमृत्युप्रशमनी सर्वविघ्नविनाशिनी[3] ।
सर्वाङ्गसुन्दरी देवी सर्वसौभाग्यकारिणी[4] ॥१५१॥

एताश्च

तथैव देवदेवेशि पुनरेवाद्यविद्यया ।
द्वितीयावरणे देवि देवीदशकमर्चयेत् ॥१५२॥

आद्यविद्ययेति अनन्तरमेव उद्धृतया मायालक्ष्मीलक्षणद्व्यक्षरात्मिकयेत्यर्थः । यदुक्तं

'नासाक्रान्तं महाप्राणं दण्डाकारं सबिन्दुकम् ।

---

१ 'देवी' ग. । २ 'सौभाग्यदायिनी' ग. । ३ 'निवारिणी' ग. । ४ 'दुःखविमोचिनी' ग. पाठः ।

तद्वद्गुह्यं च कुर्वीत विद्येयं ह्युत्तरा मता ॥'

इति । तथैवेति प्रथमद्वितीययोरित्यर्थः । पुनरेवेत्यनेन तृतीयचतुर्थयोरपि अस्या एव विनियोग इति उक्तं तस्या एव उपक्रान्तत्वात् विद्यान्तरस्य च अनुक्तत्वात् । त्र्यर्णविद्यापक्षे पुनरेतत् न किंचित्संगच्छते तस्याः पूर्वमेव विनियुक्तत्वादिह अप्रस्तावात् । श्रीरसमहोदधावपि

'मायालक्ष्मीमये बीज आद्यचक्रस्य पूजने ।
तत्संयुक्तं द्वितीयस्य स्वरषोडशकं पृथक् ॥'

इत्यादिवाचकान्तरावचनात् चक्रचतुष्टयोपलक्षणपरमेवेति न कश्चित् दोषः । गुरवोऽपि

'...... ............इत्थं चक्रेषु षट्स्वपि ।
चक्रेशिवर्जं योगिन्यो मायाश्रीबीजयोजिताः ॥'

इति । नच अत्र

'आद्यां विद्यां चाहुर्वागेशीं मातृकाम्..................' ।

इति मातृकार्थोऽपि व्याख्येयः

'वामावर्तविलोमक्रमतश्चक्रत्रयं तयैव पुनः ।
मनुदिक्संख्यकलात्रयैश्चार्च्यं क्षतः कान्तैः ॥'

इति, तथा

'वर्गाष्टकपूर्वाक्षरवाचकताप्यष्टकात्रितये ।'

इत्यादेर्विभागस्य अश्रुतत्वात् द्वितीयावरणं प्रति चक्रान्तश्चतुर्दशारापेक्षया । चक्रेश्वरी च अत्र त्रिपुरा श्रीः । यदुक्तं

'कुलकौलिकयोगिन्यः सर्वसिद्धिप्रदायके ।
सर्वसिद्धिप्रदाद्यास्तु चक्रे सर्वार्थसाधके ॥'

इति ।

'पञ्चमे त्रिपुरा श्रीश्च.......................... ।'

इति ॥ १५२ ॥

सर्वरक्षाकराख्यं षष्ठमपि आह

सर्वज्ञा सर्वशक्तिश्च सर्वैश्वर्यप्रदायिनी[1] ।
सर्वज्ञानमयी देवी सर्वव्याधिविनाशिनी ॥१५३॥
सर्वाधारस्वरूपा तु सर्वपापहरी[2] तथा ।
सर्वानन्दमयी देवी सर्वरक्षास्वरूपिणी ॥१५४॥
पुनरेव महेशानि सर्वेप्सितफलप्रदा ।
दशमी[3] देवता ख्याताः स्वनामसदृशोदयाः ॥१५५॥
एवमेता महादेवीर्देवि सर्वार्थसिद्धिदाः ।
पूर्वोक्तेन विधानेन तृतीयावरणेऽर्चयेत् ॥१५६॥

स्वनामसदृशोदया इति सर्वार्थसिद्धिदा इति च सर्वशेषः । पूर्वोक्तेनेति ह्यक्षरविद्याप्रयोगवामावर्ताद्यात्मना । चक्रेश्वरी च अत्र त्रिपुरमालिनी । यदुक्तं

'निगर्भदेवताश्चक्रे सर्वरक्षाकरे परे ।
सर्वज्ञाद्या महादेवि संस्थिता वीरवन्दिते ॥'

इति ,

'......................षष्ठे त्रिपुरमालिनी ।'

इति च ॥ १५६ ॥

सर्वरोगहराख्यं सप्तममपि आह

आद्यचक्रे[4] महेशानि शृणु पूजां यथाक्रमम्[5] ।
एकैकं देवतानाम पूर्वोक्तं[6] बीजसंयुतम् ॥१५७॥
अधस्ताद्देवदेवेशि वाममार्गेण[7] पूजयेत् ।

१ 'प्रदा तथा' ग. । २ 'हरा' ग. । ३ 'दशैव देवताः ख्याताः' ग. पाठः । ४ 'मध्य' ग. । ५ 'क्रममित्यनन्तरं 'वशिनीमपि कामेशीं मोदिनीं विमलामपि । अरुणां जयिनीं चापि सर्वेशीं कौलिनीमपि ॥' ग. अधिकः । ६ 'प्रोक्तबीजसमन्वितम्' ग. । ७ 'वामावर्तेन' ग. पाठः ।

यावद्दक्षिणमार्गं तु रक्तपुष्पैर्महेश्वरि ॥१५८॥

अधस्तादारभ्य पश्चिमादारभ्येत्यर्थः । रक्तपुष्पैरिति सर्वशेषः । चक्रेश्वरी च अत्र त्रिपुरा सिद्धिः । यदुक्तं

'रहस्यदेवताश्चक्रे सर्वरोगहरे प्रिये ।

वशिन्याद्या महादेव्यः संस्थिताः परमार्थतः ॥'

इति ,

'..................सप्तमे त्रिपुरा सिद्धिः ।'

इति च ॥ १५८ ॥

सर्वसिद्धिमयाख्यमष्टममपि चक्रमाह

पश्चिमोत्तरपूर्वादिदक्षिणानुक्रमेण तु[1] ।

चक्रमध्ये चतुष्कं तु क्रमेण परिपूजयेत् ॥१५९॥

चक्रमध्ये इति अर्थात् मूलत्रिकोणात् बहिः, तत्रैव बाह्यान्तरालचतुष्टयं चतसृषु दिक्षु अस्तीतिभावः । पूर्वादीति आदिशब्देन अपि वामावर्त एव उपोद्बलितः ॥ १५९ ॥

किं चतुष्कमित्याह

कामबाणान्महेशानि धनुस्तत्पाशमेव च ।

जम्भमोहवशस्तम्भपदैः सहितमङ्कुशम् ॥१६०॥

अङ्कुशमिति कामपदसंनिधेस्तदीयमेव ज्ञेयम् । एतत्साजात्यादत्र देव्यस्त्राणामपि पूजनं स्यात् , न केवलमिति यावत् ॥ १६० ॥

सर्वमध्यत्रिकोणेऽपि[2] पूजयेन्मूलविद्यया ।

केवलाक्षरभेदेन समस्तव्यस्तयेश्वरि ॥१६१॥

कामेश्वरीमग्रकोणे वज्रेशीं दक्षिणे तथा ।

---

१ 'पूर्वांशादक्षिणाशाक्रमेण तु' ग. । २ 'च' ग. पाठः ।

वामेऽपि[1] भगमालां तु मध्ये त्रिपुरसुन्दरीम् ॥१६२॥

केवलाक्षरभेदेनेति केवलमेकैकमक्षरं भेदयित्वेत्यर्थः । तेन मूलविद्याया व्यस्तत्वेऽपि कोणत्रयेऽपि कामेश्वर्यादित्रयमेकेन एकेन पिण्डेन वामावर्तेनैव, नतु तद्वर्जनेन, पूजयेत्; समस्तत्वे तु पिण्डत्रयेण अपि अष्टमचक्रेश्वरीं त्रिपुराम्बिकां मध्ये इति तात्पर्यार्थः । तदुक्तं

'सर्वसिद्धिमये चक्रे परमातिरहस्यगाः ।
स्थिताः कामेश्वरीपूर्वाश्चतस्रः पीठदेवताः ॥'

इति,

'..................अष्टमे त्रिपुराम्बिका ।'

इति च । केवलपदलक्षितस्य अन्त्यपिण्डात्मनोऽक्षरस्य आदिविद्यावत् वाग्भवादिस्वरत्रयसंभेदेन अष्टमी विद्येति तु गुर्वागमानुपदिष्टत्वात् न न्याय्यमिति उक्तप्रायम् । तदेवमष्टमनवमयोरपि चक्रयोः श्रीदेवीपञ्चशतिके सृष्टिसंहारचक्रयोरिव एकैकविद्येति न कश्चित् विरोधः । एवंच अस्या अष्टम्या विद्याया अष्टमनवमयोश्चक्रयोश्चक्रेश्वरीवाचकत्वाभिधानादवशिष्टस्य अपि विद्यासप्तकस्य प्रथमचक्रादारभ्य चक्रसप्तके यथाक्रमं चक्रेश्वरीवाचकत्वमर्थसामर्थ्यतो लभ्यते इति सिद्धम् । मध्ये त्रिपुरसुन्दरीमित्यावृत्त्या अपि सर्वानन्दमयाख्ये नवमचक्रेश्वरीं श्रीमहात्रिपुरसुन्दरीमिति अष्टमचक्रस्यैव मध्ये पूजयेदित्यर्थः । अनेनैव आशयेन श्रीरसमहोदधावपि

'..................प्रान्तक्रमसमन्विताम् ।'

इति उक्तम् । अत एव प्रान्तक्रमपूज्यतया 'अम्बाष्टकजुष्टं चक्रम्' इत्यादि अपि निरस्तम् । एवंहि दशममपि चक्र-

---

[1] 'भगमालां तथा वामे' ग. पाठः ।

मुक्तं भवेदिति श्रुतिविरोधः स्यात् । तदुक्तं

'नवमे तु महेशानि महात्रिपुरसुन्दरी ।
मूलविद्या समाख्याता त्रैलोक्यवशकारिणी ॥
एवं नवप्रकाराद्या पूजामात्रेण पार्वति ।
एकाकारा ह्यादिशक्तिरजरामरकारिणी ॥'

इति,

'सर्वानन्दमये चक्रे महापूर्णेश्वरीश्वरी ।
संस्थिताद्या सर्वमयी महात्रिपुरसुन्दरी ॥
लोकातीतस्वभावा तु प्रान्तक्रमसमन्विता ।
परमाद्वैतभावस्था महापूजापरा प्रिये ॥'

इति च । ये पुनर्नवमं चक्रं मुण्डव्योमनि एव पूजनीयमिति आमनन्ति, तेषां चक्रे नव चक्राणि पूजितानि तावत् न स्युरिति प्रस्तुतवस्तुव्याघातः । चक्रान्तराणां च मुण्डव्योमनि पूजनं केन निषिद्धमिति अलं खण्डितपारम्पर्यलाभदुःशिक्षितैः सह संलापेन ॥ १६२ ॥

इह तावत्

'आवाहिते मन्त्रगणे पुष्पैः सर्वनिवेदितैः ।
धूपैश्च तर्पणं कार्यं श्रद्धाभक्तिबलोदितम् ॥'

इत्याद्युक्त्या अवश्यकार्यं तर्पणमित्याह

एवं पूजाविधानं तु कृत्वादौ साधकोत्तमः ।
धूपगन्धादिनैवेद्यतर्पणानि[1] निवेदयेत् ॥१६३॥

ततोऽपि

संक्षोभद्रावणाकर्षावेशो[2]न्मादमहाङ्कुशाः ।
खेचरी[3]बीजरूपादियोनिमुद्रास्त्वनुक्रमात् ॥१६४॥

---

१ 'धूपदीपौ च नैवेद्य' ग.।२ 'षंवशो' ग.।३ 'बीजयोन्याख्या नव मुद्रा' ग.।

विरच्य साधकेन्द्रस्तु ध्यानं कुर्यात्समाहितः ।

अनुक्रमाद्विरच्येति प्रतिचक्रम् , तेन प्रथमचक्रे संक्षोभणी यावदष्टमबीजमुद्रा नवमत्वादिशब्दस्वीकृता त्रिखण्डमुद्रा योनिमुद्रा चेति । अत्र च मुद्राद्वयं चेत्येव पूज्यमिति गुरवः । इह सिद्धयोऽपि दशैव

'अणिमा लघिमा चैव महिमा प्राप्तिरेवच ।
प्राकाम्यं च तथेशित्वं वशित्वं च ततः परम् ॥
तथा कामावसायित्वमष्टमं परिकीर्तितम् ।'

इत्युक्ता अणिमाद्या अष्टौ सिद्धयो यथाक्रममष्टसु चक्रेषु, नवमे तु रससिद्धिर्मोक्षसिद्धिश्चेति । इह मुख्यया वृत्त्या हि भुक्तिमुक्ती एव हि तावत्फलम् । तत्र व्यस्ततया अणिमाद्या सिद्धयोऽष्टभिश्चक्रैः साध्यन्ते, समस्ततया तु मुख्ये नवमेन चक्रेण य[1]दपेक्षया रससिद्धेः पूज्यतया अभिधानम् । सैवहि सर्वसिद्धिनिधानभूतेति श्रीरसस्वच्छन्दादौ तत्र तत्र सर्वत्र उक्तम् । यथा

'पिण्डसिद्धिप्रदश्चैव सर्वकामफलप्रदः ।
अणिमाद्युदितं पूर्वं सर्वं संसाधयेदयम् ॥'

इति । श्रीरसमहोदधावपि रससिद्धिसंपत्तिनिमित्तमेव अस्या भगवत्याः श्रीमहाकामेश्वरोत्सङ्गगतत्वेन उपदेशः । यदुक्तं तत्र

'श्रुतं सर्वमशेषेण विधानं रसनायिके ।
दुर्भगानां च तन्नाथ न सिद्ध्यति कदाचन ॥
अतः सौभाग्यहेत्वर्थं नराणां हितकाम्यया ।
महाकामेश्वरस्योक्तं विधानं भैरव त्वया ॥

---

१ 'यदुपक्षेपतया' क. पाठः ।

यस्योत्सङ्गगता या सा महात्रिपुरसुन्दरी ।
तस्याः संसूचितं किंचिन्मन्त्रध्यानादिकं त्वया ॥
पृथगाराध्यते सा तु यथा भाग्यार्थिभिर्नरैः ।
तथा कथय मे देव कृपया प्राणिनां प्रभो ॥'

इति । भुक्तिश्च अस्मद्दर्शने मुक्त्यव्यभिचारिणीति सर्वशेषत्वेन अत्रैव प्राधान्यात् मोक्षसिद्धिरपि, यत्

'अणिमादिषु मोक्षान्तेष्वङ्गेष्वेव फलाभिधा' ।

इत्यादि पूर्वैरपि उक्तम् । यत् पुनरत्र अन्यैः प्राप्तियन्त्रकामावसायित्वे निवार्य भुक्तीच्छासिद्धी परिकल्प्य सिद्ध्यष्टकमेव अष्टमचक्रे बीजमुद्रादिमुद्रात्रयमित्यादि उक्तं, तत् युक्त्यागमबहिष्कृतमिति उपेक्ष्यमेव । समाहित इति परनिष्कलमन्त्रस्वरूपनिभालनैकतानानुसंधान इत्यर्थः ॥

तदेव आह

बिन्दुं संकल्प्य वक्त्रं तु तदधस्तात्कुचद्वयम्[१] ॥१६५॥
तदधः सपरार्धं च[२] चिन्तयेत्तदधोमुखम् ।

बिन्दुं समरसितशिवशक्त्यात्मकवेदनमात्ररूपं पराद्वयमयमविभागस्वभावमव्यपदेश्यं परं तत्त्वं षट्त्रिंशत्तत्त्वात्मनो विश्वस्य परामर्शात्मकत्वात् विश्रान्तिधामतया प्राधान्यात् च वक्त्रं संकल्प्य तद्रूपतया अनुसन्धाय, तदेवच स्वस्वातन्त्र्याद्धस्तात् बहिरुल्लिलासिषायां

'नौम्यनुत्तरनाथस्य रश्मिद्वयमहं सदा ।
शिवशक्तीति विख्यातं.................. ॥'

इतिदृशा शिवशक्तिदशाधिशायितया स्वस्वरूपपरामर्शनात्मककूजनात् कुचद्वयप्रायं विभागदशामापन्नं सत्

---

१ 'तदधः स्थं' ग. । २ 'तु' ग. पाठः ।

'प्राक् संवित् प्राणे परिणता'

इतिनीत्या ततोऽपि बहीरूपतायां सस्य परो हकार-स्तस्य अर्धमनच्ककला, तदात्म सामान्यप्राणरूपताभासपुरः-सरं प्राणप्रमात्रादिभूमिकामवलम्बमानं, ततोऽपि अधोमुख-मावृत्त्या

'तत एव सकारेऽस्मिन्स्फुटं विश्वं प्रकाशते ।'

इतिनीत्या सस्य प्रमेयात्मनो विश्वस्य परमर्धं पार्यन्तिकं कालाग्नयन्तं धराधिरूढं स्थूलं रूपं प्राप्तं सत् चिन्तयेत् परामृशेदिति संवित्क्रमेण अर्थः । वर्णक्रमेण अपि बिन्दुं वक्त्रं तद्रूपं संकल्प्य परामृश्य तदधस्तादपि कुचद्वयं तदाकारौ सूर्याचन्द्ररूपौ बिन्दू च, तदधोऽपि सस्य सकारस्य रेफ-रूपमग्न्यात्मकं च परमर्धमित्येवं सबिन्दुं तुर्यस्वरं, आवृ-त्त्या तदधोऽपि सस्य परो हकारस्तस्य अर्धमनच्कहकला, तदधोऽपि सस्य परमर्धरेफरूपं त्रिकोणाकारं योगिनी-वक्त्रादिशब्दव्यपदेश्यमधोमुखमित्येवं निष्कलमन्त्रात्म माया-बीजं चिन्तयेदनुसंदध्यादित्यर्थः । इयच्च अस्य निष्कलत्वं य-दीकारेण शक्तिरूपत्वाविशेषादेकारो, हकारेण मादनत्वसा-जात्यात् ककारो रेफेण च रलयोरेकत्वस्मरणात् लकारः, सपरार्धत्वाच्च सकारः संगृहीत इति मूलविद्याया एव इदं सकलकलोपसंहारात्मकं पिण्डितं सूक्ष्मरूपमिति । धाम-क्रमश्च एतन्नान्तरीयकतया उक्तप्राय एवेति अलं बहुना ॥

किमालम्बनं च एवंध्यानमित्याह

**एवं कामकलारूपमक्षरं यत्समुत्थितम् ॥१६६॥**

**कामादिविषमोचाणामालयं परमं[1] ध्रुवम् ।**

---

१ 'परमेश्वरि' ग. पाठः ।

तदेव तत्त्वप्रवरं निजदेहं विचिन्तयेत् ॥१६७॥

एवमुक्तेन प्रकारेण त्रितत्त्वरूपेऽपि प्राधान्यात् कामकलारूपमक्षरं प्रवृत्तावविरतेन रूपेण अवभासमानम्, अत एव ध्रुवं निष्कलं, निष्कलैकरूपत्वाच्च परमम्, अत एव कामादित्रिषमोक्षाणामालयं यत् सम्यगनुभवैकमात्रतया उत्थितमुदितं, तत् निजदेहमेव तत्प्रतिकृतिरूपतया तत्त्वप्रवरं विशेषेण तदेकाकारात्मतया चिन्तयेदनुसंदध्यादित्यर्थः । शरीर एवहि सर्वेषां साक्षादेवंसंनिवेशः स्वानुभवसाक्षिक एवेति अलं विस्तरेण, आदिशब्दश्चात्र द्वितीयपटलादिप्रतिपादयिष्यमाणक्षुद्रसिद्ध्यादिसंग्रहपरतया प्रकारार्थ इति वृथाटितं वागगोचरतदर्थान्वेषणे । गुणप्रधानभावो हि सर्वसहत्वा........सर्वत्र विशिष्ट एव । यत् पुनरत्र अन्यैरन्यत्र वा साक्षात् गुरुतस्तदर्थसतत्त्वमनवगम्य श्रीतन्त्रालोकसंवादनं तदर्थप्रकाशनं वा कृतं, तत् सर्वं पितृपितामहक्रमोपनतं प्रकृतं स्पष्टं मार्गमपि अजानतामश्रुतामपूर्वामदृष्टचरां च गहनगहनां तत्सरणिं तज्ज्ञान् प्रति प्रकाशयतां तेषामेव महतीमुपहास्यतामावहति । यत् त एव आहुः

'यः पङ्गुर्बधिरश्च नाङ्गनबहिर्द्वारं ददर्शाथवा
नो शुश्राव कदापि दैशिकमुखात्काश्चित्कुतश्चित्कथाम् ।
निःशेषाध्वविदे स पोतवणिजे देशान्तरप्रक्रियाविच्छित्तीरुपपादयत्ययमहो हासावतारो नवः ॥'

इति । अस्माभिरेतत् गहनत्वाद् बहुवक्तव्यत्वात् ग्रन्थविस्तराधायित्वात् प्रकृतानुपयोगात् च विभज्य न दर्शितमिति न असूयितव्यं विद्वद्भिः । नहि एतत्प्रदर्शनं नाम दुःशकं किंचिदिति सर्व एव साक्षिणः । तदस्मद्गुरूप-

ज्ञताद्विवेकादधिगन्तव्यम् , किमतिप्रसङ्गेन ॥ १६७ ॥

एवमासादितपरस्वरूपावेशः किं कुर्यादित्याह

ध्यात्वा चक्रेण सहितां ततस्त्रिपुरसुन्दरीम् ।
[1]स्वमुद्रया साधकेन्द्रः क्षमस्वेति विसर्जयेत् ॥१६८॥

स्वमुद्रयेति संहाररूपयेति शिवम् ॥ १६८ ॥

इति राजानकश्रीमज्जयरथविरचिते
श्रीवामकेश्वरीमतविवरणे प्रथमः पटलः ॥ १ ॥



अथ

# द्वितीयः पटलः ।



एवंपूजनेन कृतेन अस्य किं स्यादिति पाटलिकं संबन्धमनुबध्नन् भगवानाह*

यत्रानेन विधानेन साधकेन प्रपूज्यते ।
देशे वा नगरे ग्रामे [2]जगत्क्षोभः प्रजायते ॥ १ ॥

नगरे ग्रामे वेत्यनेन देशावक्लृप्तिवचनेन इदमावेदितं

---

१ 'स्वमुद्रया शक्तिचक्रं खेचर्याद्याश्च योजयेत्। खेचर्यां शक्तिचक्रं तु क्षमस्वेति विसर्जयेत् ॥' ग. । * भैरव उवाच । श्रृणु देवि प्रवक्ष्यामि मन्त्रयोगं यथाविधि ।' ग. अधिकः । २ 'तत्र क्षोभः' ग पाठः ।

यदन्यनिरपेक्षमेव एतत्पूजनं सर्वाः सिद्धीः करोतीति । तेन द्वीपाम्नायोपदेशाद्यपेक्षणं न वाच्यम्, तत्र हि देशप्राधान्ये-नैव जगत्क्षोभादि विवक्षितमिति अलं बहुना ॥ १ ॥

को नाम जगत्क्षोभ इत्याह

ज्वलत्कामाग्निसन्तापप्रतापोत्तप्तमानसाः ।

पिपीलिकास्थिन्यायेन दूरादायान्ति योषितः ॥ २ ।

यतः

मन्त्रसंमूढहृदयाः स्फुरज्जघनमण्डलाः ।

तद्दर्शनान्महादेवि जायन्ते सर्वयोषितः ॥ ३ ॥

ननु किमेतत् पूजनमात्रादेव स्यान्नवेत्याह

जप्ते लक्षैकमात्रे तु क्षुभ्यन्ते भूतलेऽङ्गनाः[1] ।

ननु एतावतैव चेत् न असौ बहिर्मुखीभवति, तदा अस्य किं स्यादित्याह

यदि न क्षुभ्यतीत्थं हि साधकस्य मनो मनाक् ॥४॥

संक्षुभ्यन्ति ततः सर्वाः पाताले नागकन्यकाः ।

संक्षुभ्यन्तीति अर्थात् द्वितीयस्मिन्नपि लक्षे जप्ते ॥

एवमपि पूर्ववदेव विशिष्टसिद्ध्युन्मुखत्वे

तासामपि यदा नासौ क्षोभं याति मनागपि ॥५॥

ततः स्वर्गनिवासिन्यो विद्रवन्ति सुराङ्गनाः ।

तृतीयेऽपि लक्षे जप्ते इति शेषः ॥

तदेव उपसंहरति

एवं लक्षत्रयं जप्त्वा व्रतस्थः साधकोत्तमः ॥ ६ ॥

---

१ 'लाङ्गनाः' ग. पाठः ।

संक्षोभयति देवेशि त्रैलोक्यं सचराचरम् ।

एवं मान्त्रं प्रयोगमुक्त्वा यान्त्रमपि आह

लिखित्वा विपुलं चक्रं तन्मध्ये प्रतिमां यदि[1] ॥७॥
नाम्ना लिखति संयुक्तां[2] ज्वलन्तीं चिन्तयेत्ततः ।
शतयोजनमात्रस्था त्वदृष्टापिच या भवेत् ॥ ८ ॥
भयलज्जाविनिर्मुक्ता साप्यायाति विमोहिता ।

विपुलमिति साध्यप्रतिमालिखने विशेषणद्वारको हेतुः ॥

अत्रैव पक्षान्तरमाह

तन्मध्यगोऽथवा भूत्वा मन्त्रं[3] संचिन्तयेद्यदा ॥ ९ ॥
सर्वमात्मानमरुणं साध्यमप्यरुणीकृतम् ।
ततः संजायते देवि सर्वसौभाग्यसुन्दरः ॥ १० ॥
वल्लभः सर्वलोकस्य साधकः परमेश्वरि ।

तन्मध्यग इति लिखनद्वारेणैव, अत एव पूर्वं विपुलमिति उक्तम् । सर्वमिति आत्मानं मन्त्रं साध्यं च यदा अरुणं संचिन्तयेदिति अन्वयः ॥

तृतीयमपि पक्षमाह

सर्वरक्तोपचारैस्तु पूज्यते[4] मुद्रया युतम् ॥ ११ ॥
यस्य नाम्नैव संयुक्तं स भवेद्दासवद्वशी ।

मुद्रयेति वक्ष्यमाणदृशा योनिरूपया । नाम्नैवेति, नतु प्रतिमादिना अपि ॥

चतुर्थमपि आह

अदृष्टायास्तु संयोज्यं[5] नाम चक्रस्य मध्यगम् ॥ १२ ॥

---

१ 'यदा' ग. । २ 'संयुक्तो' क. । ३ 'मन्त्री' ग. । ४ 'पूजयेत्' ग. । ५ 'संयोज्य' ग. पाठः ।

विरच्य योनिमुद्रां तु तामाकर्षयति क्षणात् ।
यक्षिणीं चाथ गन्धर्वीं किन्नरीं वासुरेश्वरीम् ॥१३॥
सिद्धकन्यां नागकन्यां दे[1]वकन्यां च खेचरीम् ।
विद्याधरीमप्सरसमृषिकन्यामथोर्वशीम् ॥१४॥
मदनोद्भवविक्षोभ[2]झरज्जघनलम्बिकाम् ।

अदृष्टाया इति आकर्षयतीति च पूर्वस्मात् विशेषकम् । झरदिति द्रवेणेत्यर्थः ॥

ध्यानजपमुखेन अपि आह

महाकामकलाध्यानात्क्षोभयेत्सर्वयोषितः ॥ १५ ॥

तथा

रोचनाकुङ्कुमाभ्यां च सम[3]भागं च चन्दनम् ।
अष्टोत्तरशतं जप्त्वा तिलकं [4]कारयेद्बुधः ॥ १६ ॥

एवं किमित्याह

ततो यमीक्षते वक्ति सं[5]स्पृशेच्चिन्तयेच्च यम् ।
अर्थेन च शरीरेण [6]सोऽवश्यं याति दासताम्॥१७॥

अन्यच्च

तथा पुष्पं फलं गन्धं पानं वस्त्रं महेश्वरि ।
[7]शतमष्टोत्तरं जप्त्वा यस्याः संप्रेर्यते स्त्रियाः ॥१८॥
सद्यः [8]आकर्षयेत्साध्वीं विमूढहृदयां सतीम् ।

तामिति शेषः, सतीं भवन्तीमित्यर्थः ॥

---

१ ‘यक्षकन्यां’ ग । २ ‘स्फुरज्जघनमण्डलाम्’ ग. । ३ ‘सप्तभागं’ ग. । ४ ‘धारयेत्’ ग. ५ ‘स्पृश्यते’ ग. । ६ ‘स वश्यं याति दासवत्’ ग. । ७ ‘अष्टोत्तरशतं जप्त्वा यस्याः संप्रेष्यते’ ग. । ८ ‘आकृष्यते सा तु’ ग. पाठः ।

यतः

हठाकृष्टिरियं भद्रे न क्वचित्प्रतिहन्यते ॥ १९ ॥

प्रकारान्तरेण अपि यन्त्राणि आह

लिखेद्रोचनयैकान्ते प्रतिमामवनीतले ।
सुरूपां चारुशृङ्गारवेशाभरणमण्डिताम्[1] ॥ २० ॥

ततः

तद्भालतल[2]हृन्नाभिजन्ममण्डलयोजिताम्[3] ।
जन्मनामहाविद्यामङ्कुशेन[4] विदर्भिताम् ॥ २१ ॥
सर्वाङ्गसन्धिसंलीनमालिख्य मदनाक्षरम् ।
तदाशाभिमुखो भूत्वा त्रिपुरीकृतविग्रहः ॥ २२ ॥
बद्ध्वा तु क्षोभिणीं[5] मुद्रां विद्यामष्टोत्तरं[6] जपेत् ।

जन्मनामसहितां महाविद्यामिति मध्यपदलोपी समासः। अङ्कुशेन विदर्भितामालिख्येति नामविद्ययोरन्तरं सकृदङ्कुशमन्त्रन्यासः कार्य इत्यर्थः । मदनाक्षरं चेति शेषः ॥

नच केवल एव अवनीतले प्रतिमां लिखेदित्याह

नियोज्य दहनागारे चन्द्रसूर्यकलालये ॥ २३ ॥

एवमवन्यां सषण्ठाषण्ठस्वरपङ्क्तिद्वयवलयितमूर्ध्वमुखं त्र्यश्रमालिख्य तदन्तः प्रतिमां लिखेदिति तात्पर्यार्थः ॥ २३ ॥

एवं कृते सति किं स्यादित्याह

ततो विह्वलितापाङ्गा[7]मनङ्गशरपीडिताम् ।
प्रोच्छलन्मदकल्लोलप्रचलज्जघनस्थलाम्[8] ॥ २४ ॥

---

१ 'भूषिताम्' ग. । २ 'गल' ख. । ३ 'योषिताम्' क. । ४ 'अंकुशान्तर्विद' ग. ५ 'मोचिणी' क- ख । ६ 'अष्टशतं' ग. । ७ 'विचालिता' ग । ८ 'प्रोच्चल…… प्रस्फुरज्जघनस्थलीम्' ख पाठः ।

शक्तिचक्रो[1]च्छलच्छक्तिज्वलनाकवलीकृताम् ।
दूरीकृतस्वचारित्रभयलज्जानयाङ्कुशाम् ॥ २५ ॥
आकृष्टहृदयां नष्टधैर्या[2]मुत्तीर्णजीविताम् ।
वप्रप्रा[3]कारनिविडनदीयन्त्रसुरक्षिताम् ॥ २६ ॥
नवानुरागसन्धानवेपमानहृदम्बुजाम् ।
मनोधिकमहामन्त्रवेगेना[4]पहृतांशुकाम् ॥ २७ ॥
विमूढामिव विक्षुब्धामिवा[5]प्लुष्टामिव स्रुताम् ।
लिखितामिव निःसंज्ञामिव प्रमथितामिव ॥ २८ ॥
[6]दलितामिव संभ्रान्तामिवो[7]त्त्रासमितामिव ।
[8]गलितामिव संभिन्नामिवाकुलितमानसाम्* ॥ २९ ॥
[9]भ्रमन्मन्त्रानिलोद्भ्रान्तपत्राकारां नभस्तले ।
भ्रमन्तीमानयेन्नारीं योजनानां श[10]तादपि ॥ ३० ॥

रक्षायन्त्राणि अपि आह

अथवा मातृकां सर्वां लिखित्वा चक्रबाह्यतः ।
धारयेद्बाहुमूले य[11]स्त्ववध्यः सर्वजन्तुषु ॥ ३१ ॥

तथा

[12]तथैव हि महेशानि स्वसंज्ञाक्रमयोगतः ।

---

१ 'चक्रोच्चलत्' क. । २ 'उड्डीनजी' ग । ३ 'प्रासादनिगड' ख । ४ 'पवनापहृतां' ग. । ५ 'व श्रान्तामिव द्रुताम्' ख । ६ 'गलितां' ग । ७ 'वोड्डामरितामिव' ख । ८ 'विहस्तामिव संकीर्णां' ग । * 'निलीनामिव निश्चेष्टामिवान्यत्वं गतामिव' ग. अधिकः । ९ 'भ्रमन्महानिलोद्भूतयन्त्राकारां नभस्थले' ग. । १० 'शतैरपि' ग. । ११ 'सोऽवध्यः' ख. । १२ 'तवैव' ख. पाठः ।

चन्दनागुरुकर्पूरैरजरामरतां लभेत्[1] ॥ ३२ ॥

तथैवेति पूर्वोक्तसर्वार्थातिदेशः, संख्यायोगस्तु अधिकः । चन्दनादि तु पूर्वत्र अपि योज्यम् ॥ ३२ ॥

तथा

एतदेव[2] विधानेन रोचनागुरुकुङ्कुमैः ।

लिखितं चक्रयोगेन यस्मिंस्तस्मिन्[3]नपि स्थितम् ॥३३॥

साध्यनाम स्वनाम्ना तु चक्रस्यान्तर्विदर्भितम् ।

करोति सकलं लोकं[4]मचिरात्पादवर्तिनम् ॥ ३४ ॥

एतदेवेति चक्रम् । चक्रयोगेनेति मातृकाक्षराणाम् । यस्मिंस्तस्मिन्निति बाहुमूलशिखादौ । चक्रस्य अन्तस्तु साध्यनाम, ततः स्वं नाम; तच्च अन्ते सकृन्न्यस्तया विद्यया विदर्भितं कार्यमिति गर्भवाक्यम् ॥ ३४ ॥

तथा

मध्यं गतेन बीजेन महाकामकलात्मना ।

एकमेकमवष्टभ्य साध्यनामाक्षरं प्रिये ॥ ३५ ॥

बहिरप्यखिलैरेव वेष्टयेन्मातृकाक्षरैः ।

एकमेकं साध्यनामाक्षरं वेष्टयेदिति अन्वयः । मध्यगतेनेत्यनेन चक्रान्तरेव एतत्कार्यमिति कटाक्षितम्, अन्यथा बहिरपीति असङ्गतं स्यात् । अवष्टभ्येति

'अभिधेयार्णकैकं तु यन्त्रवर्णपुटीकृतम् ।

ग्रथितं मन्त्रिभिर्ज्ञेयं...... ..................... ॥'

इत्युक्त्या संग्रथ्येत्यर्थः ॥

---

१ 'व्रजेत्' ग । २ 'एवं देवि' ख. । ३ 'कस्मिन्' ग. । ४ 'लांल्लोकान्.........वर्तिनः ग. पाठः ।

ततः

हेममध्यगतां[1] कृत्वा धारयेद्वामके भुजे ॥ ३६ ॥

रक्षामिति शेषः ॥ ३६ ॥

न केवलमत्रैव, यावत्

शिखायामथवा वस्त्रे धारयेद्यत्र तत्र वा ।

एवमियं रक्षा

करोति दासभूतं हि त्रैलोक्यं सचराचरम् ॥ ३७ ॥

संमोहयति राजानं वाजिनं दुष्टकुञ्जरम् ।

चौरं[2] केसरिणं सर्पं[3] परमन्त्रं[4] महाग्रहम् ॥ ३८ ॥

शत्रुं वज्राशनिं शस्त्रं डाकिनीं[4] शाकिनीं तथा ।

भूतप्रेतपिशाचांश्च धारिता चक्ररूपिणी ॥ ३९ ॥

पुरादिक्षोभकमपि यन्त्रमाह

तेन चक्रेण सन्दर्भ्य पुराणां नाम सुन्दरि ।

मध्ये चतुष्पथे वापि चतुर्दिक्षु निधापयेत् ॥ ४० ॥

तेनेति पूर्वोक्तेनैव अन्तर्बहीरूपत्वादिना । संदर्भ्येति न पुनः संग्रथ्य । मध्ये इति अर्थात् पुराणाम्, एवमन्यत्रापि । निधापयेदिति यन्त्रम् ॥ ४० ॥

एवं किं स्यादित्याह

महाहल्लोहलो[5] देवि ततो लोकस्य जायते ।

योषितां च विशेषेण त्वद्दृष्टानामपीश्वरि[6] ॥ ४१ ॥

तथा

एतन्मध्यगतां पृथ्वीं सशैलवनकाननाम् ।

---

१ 'गतं' ख । २ 'चो' ग । ३ 'चक्रं' ग । ४ 'वेतालं राक्षसं' ग. । ५ 'महान् कोलाहलस्तत्र' ग. । ६ 'विद्विष्टानां' ख. पाठः ।

चतुःसमुद्रपर्यन्तां ज्वलन्तीं चापि चिन्तयेत्[1] ॥४२॥

पृथ्वीमिति अर्थात् पूर्ववत् नामलेखनपूर्वमेव ॥ ४२ ॥

ततः

षण्मासं[2]ध्यानयोगेन जायते मदनोपमः ।

ततः किमित्याह

दृष्ट्वैवाकर्षयेल्लोकं[3] दृष्ट्वैव कुरुते वशम्[4] ॥ ४३ ॥

दृष्ट्वा क्षोभयते[5] नारीं दृष्ट्वा संहरते विषम् * ।

दृष्ट्वा करोति चावेशं दृष्ट्वा सर्वविमोहनम्[6] ॥४४॥

दृष्ट्वा चातुर्थिकादींश्च नाशयेदचिराज्ज्वरान्[7] ।

अस्यैव कालनैयत्येन अपि फलान्तरमपि आह

एतत्प्रपूजितं रात्रौ सिन्दूरेण विचित्रितम्[8] ॥ ४५ ॥

करोति महदाकर्षं सुदूरादपि योषिताम् ।

एतदिति ज्वलन्मध्यगतयथोक्तपृथ्वीकं चक्रम् ॥

दिङ्नैयत्येन आह

सर्वदिक्षु[9] विदिक्ष्वेवं यथा[10] देवी प्रपूज्यते ॥४६॥

दिगनुक्रमयोगेन तदा सर्वं जगद्वशे ।

एवमिति रात्रिसिन्दूरितत्वादिक्रमेण । दिगनुक्रमेति तत्त-त्पूर्वादिदिगनुसारेणेत्यर्थः ॥

पुरादिक्षोभणे यन्त्रान्तरमाह

---

१ 'चिन्तयेत् प्रिये' ग. । २ 'षण्मासान्' ग. । ३ 'दृष्ट्वैवाकर्षयेल्लोकान्' ग । ४ 'वशे' ग । ५ 'संक्षोभयेन्नारीं दृष्ट्वैवापहरेद्विषम्' ग । * 'दृष्ट्वाकरोति वागीशं दृष्ट्वा सर्वं विमोहयेत्' ग अधिकः । ६ 'सर्वं विमोचयेत्' ग । ७ 'विषम' ग । ८ 'चक्रं सिन्दूररञ्जितम्' ग । ९ 'सदा' ग. । १० 'यदा देवि' ग. पाठः ।

भूर्जपत्रे समालिख्य[1] रोचनागुरुकुङ्कुमैः ॥४७॥
संदर्भयेत्तस्य मध्ये नगरं वाथवा पुरम् ।
विपुलं देशमथवा विषयं मण्डलं च[2] वा ॥४८॥
स्वनामदर्भितं कृत्वा.................. ।

समालिख्येति चक्रं, तस्य चक्रस्य मध्ये नगरादिनाम स्वनामदर्भितं विद्यया संदर्भयेदिति तात्पर्यार्थः ॥ ४८ ॥

एवं कृते

.............यदि भूमौ निधापयेत् ।
धारयेदथवा हस्ते कण्ठे वा भुजमूलतः[3] ॥४९॥
शिखायामथवा वस्त्रे यत्र तत्र स्थितं च वा ।

तदा

चक्रमेतन्महाभागे पुरक्षोभणमुत्तमम् ॥५०॥

रक्षान्तरमपि आह

अर्कक्षीरं कुङ्कुमं च धत्तूरकरसं तथा ।
रोचनालक्तकं लाक्षारसं मृगमदोत्कटम् ॥५१॥
एकीकृत्य चक्रमेतल्लिख्यते यस्य संज्ञया ।
तस्य चोरग्रहव्याधिरिपुसिंहाहिवाजिनाम्[4] ॥५२॥
यक्षराक्षसभूतौघशाकिनीदुष्टचेतसाम्[5] ।
लूतादिगर्दभज्वाला[6] तथा शीतलिकोद्भवम् ॥५३॥
भयं न विद्यते.................. ।

---

१ 'विलिख्यैतन्नवे निर्विवरोदरे । रोचनागुरुकाश्मीरैर्मध्ये संदर्भयेत्पुरम्' ग. । २ 'तथा स्वनामसहितं' ग. । ३ 'बाहु' ग. । ४ 'वाजिजम्' ख. । ५ 'वेताल भूतप्रेतपिशाचजम्' ग. । ६ 'वृश्चिककीटानां कामलाशीतिकोद्भवम्' ग. पाठः ।

तथा

... ................तस्य परमन्त्राभिचारकम्[1] ।

नित्यसंधारणाच्चापि[2] कालमृत्युयमादयः ॥५४॥

न शक्ता हिंसितुं सम्यग्रोमैकमपि सर्वदा[3] ।

प्रकारान्तरेण अपि यन्त्रप्रयोगमाह

अथवा मध्यगां[4] देवीं त्रिकोणोभयगां तथा ॥५५॥

अधस्तान्नामसंयुक्तां रोचनाकुङ्कुमाङ्किताम् ।

कुर्या[5]द्यस्तु च सप्ताहाद्दासवत्किङ्करो भवेत् ॥५६॥

त्रिकोणोभयगामिति षडश्रगतां, तत्र अपि मध्यगतां, नतु अवान्तरकोणगताम् ॥ ५६ ॥

तथा

पीत[6]द्रव्येण वालिख्य धारयेदिन्द्रदिग्गताम् ।

नाम्ना सर्वज्ञभूतोऽपि मूको भवति तत्क्षणात् ॥५७॥

धारयेदिति षडश्रमध्यगां देवीमर्थात् यस्य नाम्ना अधः संयुक्तां, भवतीति सः ॥ ५७ ॥

तथा

महानील[7]रसेनापि नाम संयोज्य पूर्ववत् ।

दक्षिणाभिमुखो वह्नौ द[8]ग्ध्वा तं मारयेत्क्षणात् ॥५८॥

नामेति यस्य, दग्ध्वेति अर्थात् यन्त्रम् ॥ ५८ ॥

तथा

महिषाश्वपुरीषाभ्यां गोमूत्रेण[9] समाङ्कितम् ।

---

१ 'रजम्' ग. । २ 'देवि' ग । ३ 'सर्वथा' ग । ४ 'गो' ग । ५ 'निधापयेच्च' ग । ६ 'अङ्कितां लिखितां नित्यं धारयेदुज्जिघृक्षताम्' ग । ७ 'नीलीरसेन' ग । ८ 'दग्ध्वा मारयते' ख । ९ 'णाङ्कितं लिखेत् नाम्नारनाल' ग पाठः ।

क्षिप्त्वारनालमध्यस्थं विद्विष्टः सर्वजन्तुषु ॥५६॥

गोमूत्रालोडितेन महिषाश्वपुरीषेण पूर्ववत् यन्नाम्ना लिखितं चक्रमारनालमध्ये क्षिप्यते, स सर्वविद्विष्टः स्यादिति वाक्यार्थः ॥ ५६ ॥

तथा

युक्त्वा रोचनया नाम काकपर्त्तस्य मध्यगम् ।

लम्बमानं तदाकाशे उच्चाटनकरं परम् ॥६०॥

युक्त्वेति षडश्रमध्यस्थदेव्यधस्तात् । नामेति यस्य मध्यगमिति कृत्वा, उच्चाटनकरं तस्य ॥ ६० ॥

तथा

दुग्धलाक्षारोचनादिमहानीलरसादिभिः ।

लिखित्वा धारयेद्देवि चातुर्वर्ण्यं वशं नयेत् ॥६१॥

दुग्धेति । लिखित्वेति अर्थात् पूर्वोक्तभङ्ग्यैव । चक्रं धारयेदिति भुजादौ । वशं नयेत् दुग्धलिखितेन ब्राह्मणान् यावन्महानीलरसलिखितेन शूद्रानिति ॥ ६१ ॥

तथा

एतदेव विधानेन जलमध्ये यदा क्षिपेत् ।

सौभाग्यमतुलं तस्य स्नानपानान्न संशयः ॥६२॥

एतदिति यथोक्तं चक्रम् । विधानेनेति दुग्धलेखनात्मना । तस्येति चातुर्वर्ण्यस्य । स्नानपानादिति मध्यक्षिप्तचक्रजलस्य ॥ ६२ ॥

तथा

---

१ 'क्षेण संलिखेत । नीलकर्पटके सम्यङ्नीलसूत्रेण वेष्टयेत् । लम्बमानं' ग । २ 'परमुच्चाटनं भवेत' ग । ३ 'नीलीरसेनच' ग । ४ 'चक्रं' ग । ५ 'एतेनैव' ग. ६ 'विनिक्षिपेत' ख । ७ 'पानादिना भवेत' ग. पाठः ।

एतन्मध्यगतां देवि[1] नगरीं वा वराङ्गनाम् ।
सप्ताहात्क्षोभयेत्सत्यं ज्वलमानां विचिन्त्य ताम् ॥६३॥

इदानीं पूजाविशेषानाह

महापातकयुक्तात्मा यदि देवि[2] प्रपूजयेत् ।
शमीदूर्वाङ्कुराश्वत्थपल्लवैरथवार्कजैः ॥ ६४ ॥
मासेन हन्ति कलुषं सप्तजन्मकृतं नरः ।

पूजयेदिति अर्थादेतत् चक्रम् ॥

तथा

लिखित्वा पीतवर्णं[4] तु चक्रमेतद्यदार्चयेत् ॥६५॥
पूर्वाशाभिमुखो भूत्वा स्तम्भयेत्सर्ववादिनः ।

तथा

सिन्दूररेणुलिखितं पूजयेदुत्तरामुखः ॥६६॥
यदा तदास्य वशगो लोको भवति सर्वदा ।

तथा

चक्रं गैरिकमालिख्य पूजयेत्पश्चिमामुखः ॥ ६७ ॥

एवं किं स्यादित्याह

स[6] च सर्वाङ्गनाकर्षवश्यक्षोभकरो भवेत् ।

तथा

दक्षिणाभिमुखो भूत्वा कृष्णवर्णं[7] यदार्चयेत् ॥६८॥
यस्य नाम्ना तस्य नित्यं मन्त्रहानिस्तु जायते ।

---

१ 'देवीं नागरीं वा सुराङ्गनाम्' ग. । २ 'देवीं' ग. । ३ 'सहा' ख. । ४ 'वर्णे न' ग. । ५ 'गैरिकेणेतदालिख्य' ग । ६ 'सोऽपि' ख । ७ 'कृष्णां चक्रे समर्चयेत्' ग. पाठः ।

तथा

तद्वद्दिगन्तरालेषु पूजितं परमेश्वरि ॥६९॥

स्तम्भविद्वेषणव्याधिशत्रूच्चाटनकारकम् ।

तद्वदित्यनेन पीतादिवर्णवामावर्तादि यदिष्टं, तेन ईशकोणे पीतवर्णः, फलं स्तम्भो; यावदाग्नेये कृष्णो वर्णः, फलं च शत्रूच्चाटनमिति ॥

आश्रयभेदादपि अस्य फलभेद इत्याह

रोचनालिखितं देवि दुग्धमध्ये वशङ्करम् ॥७०॥

क्षिप्तं गोमूत्रमध्ये वा शत्रूच्चाटनकारकम् ।

[१]तक्रमध्यगतं चक्रं विद्वेषणकरं परम् ॥७१॥

ज्वलज्ज्वलनमध्यस्थं सर्वशत्रुविनाशनम् ।

देशकालादिवैशिष्ट्येन अपि पूजाविशेषानाह

अथवा देवदेवेशि यदेकान्ते चतुष्पथम् ॥७२॥

तत्समीपे लिखेच्चक्रं सिन्दूरेण महाप्रभम् ।

सर्वबाह्यत आरभ्य यावन्मध्यं महेश्वरि ॥७३॥

अकारादिक्षकारान्तां मातृकां तत्र विन्यसेत् ।

एवंविधं तत् चक्रं

पूजयेद्रात्रिसमये कुलाचारक्रमेण यः ॥७४॥

तत्क्षणात्स महेशानि साधकः खेचरो भवेत् ।

कुलाचारक्रमेणेति पराद्वयभावनयेति अर्थः । नहि साधकस्य स्वात्मनि परसंविदद्वैतमयमन्त्रदेवतैकात्म्यावष्टम्भमन्तरेण किञ्चिदपि सिद्ध्यतीति, अत एव सर्वमशेषत्वेन

१ 'तैलमध्य' ग. पाठः ।

एतदिह उक्तम् । यत् पुनरत्र अन्यैर्यद्यत्कर्म हि बाह्यं, तत्तत् ज्ञानं विना आन्तरं न भवेदिति आन्तरलक्षाश्रितमेव बहिः फलति कर्म कृतमिति प्रतिज्ञायामस्थाने बहु आन्तरतायामभिनिविश्य अत्र सिन्दूरलिखितचक्रे मधुमांसाद्यैः कुलोचितद्रव्यैः कुलमन्त्रसंततियुतैः पूजा कार्या इह देवीनामिति व्याख्यातं, तत् प्रतिज्ञातार्थविरुद्धत्वेऽपि अप्रयोजकं यत् पूजयेदित्यनेनैव गतार्थम् । अस्मद्दर्शने हि एतदुपकरणकमेव पूजनं, अयमर्थश्च आन्तरलक्षाश्रयणेऽपि वितायमान इत्येतद्विस्मरणं न न्याय्यमिति आस्ताम् ॥

तथा

पूजयित्वा महादेवि[१] तद्वदेकतरो गिरौ ॥७५॥
अजरामरतां सम्यग्[२]लभते नात्र संशयः ।
तद्वदिति पूर्वोक्तसर्वातिदेशः ॥

तथा

महाभूतदिने वापि श्मशाने यदि पूजयेत् ॥७६॥
पूर्ववन्निशि देवेशि साधकः स्थिरमानसः ।
पादुकाखड्गवेतालसिद्धक्र[३]व्यमनःशिला: ॥७७॥
अञ्जनं विवरं चैवं[४] चेटकं यक्षिणीं तथा ।
यत्किंचित्सिद्धिनिचयं विद्यते भुवनत्रये ॥७८॥
तत्सर्वमेव सहसा साधयेत्साधकोत्तमः ।

---

१ 'महेशानि तद्वदेकतरौ' ग. । २ 'सत्यं' ग । ३ 'द्रव्य' ख । ४ 'चेटी यक्षी दूरगतिस्तथा' ग । ५ 'संतानं' ख पाठः ।

सहसेति अचिरेण, तत्संपत्तौ को नाम वैचित्र्यातिशय इति शिवम् ॥

इति राजानकश्रीमज्जयरथविरचिते
श्रीवामकेश्वरीमतविवरणे द्वितीयः पटलः ॥ २ ॥



अथ

# तृतीयः पटलः ।



'विरच्य योनिमुद्रां तु......................' । ( २ । १३ )
इत्यादौ कथं तद्विरचनं स्यादिति पाटलिकं संबन्धमनुबध्नन्ती 'श्रीदेव्युवाच' किमित्याह

भगवंस्त्रिपुरामुद्राः सूचिता न प्रकाशिताः ।
कथं विरचनं तासां क्रियते वद शङ्कर ॥ १ ॥

देव्या एवमाशङ्कां निराचिकीर्षुः 'श्रीभैरव उवाच' किमित्याकाङ्क्षायां

शृणु देवि प्रवक्ष्यामि मुद्राः सर्वार्थसिद्धिदाः ।
याभिर्विरचिताभिस्तु संमुखा त्रिपुरा भवेत् ॥ २ ॥

तत्र

'संक्षोभद्रावणाकर्ष...... ..............' । ( १ । १६४ )
इत्यत्र साक्षादनुद्दिष्टामपि

'महात्रिपुरमुद्रां तु स्मृत्वावाहनविद्यया ।' ( १ । १३२ )
इति आसूत्रितामावाहनस्य पूर्वभावित्वादग्रनिर्वर्त्यां त्रिखण्डामुद्रामेव तावत् प्रथममाह

परिवर्त्य करौ स्पष्टावङ्गुष्ठौ[1] कारयेत्समौ ।
अनामान्तर्गते कृत्वा तर्जन्यौ कुटिलाकृती ॥ ३ ॥
कनिष्ठिके नियुञ्जीत निजस्थाने महेश्वरि ।
त्रिखण्डैषा[2] महामुद्रा त्रिपुराह्वानकर्मणि ॥ ४ ॥

परिवर्त्य करावित्ति अञ्जलिबन्धसंनिविष्टौ कृत्वेतियावत् । स्वस्तिकबन्धावस्थिते अनामे अन्तर्गते ययोरिति समासः । नियुञ्जीतेति अर्थात् समे । एवं मध्यमयोरपि अविकृतयोरेव निजावस्थानमर्थसिद्धम् ॥ ४ ॥

इदानीं संक्षोभणाद्या नव क्रमेण लक्षयति

मध्यमा[3]मध्यगे कृत्वा कनिष्ठे[4]ऽङ्गुष्ठरोधिते ।
तर्जन्यौ दण्डवत्कृत्वा मध्यमोपर्यनामिकौ[5] ॥ ५ ॥
एषा तु प्रथमा मुद्रा सर्वसंक्षोभकारिणी ।

कनिष्ठे अनामिके च अर्थात् स्वस्तिकाकारे । अङ्गुष्ठेति अर्थात् दण्डाकाराभ्याम् ॥

एतस्या एव मुद्राया मध्यमे सरले यदा[6] ॥ ६ ॥
क्रियेते परमेशानि सर्वविद्राविणी स्मृता[7] ।

सरले इति पूर्वं कुटिले इति आसाताम्, अन्यथाहि कनिष्ठागर्भीकारः कथं स्यात्; अन्यस्तु प्राच्य एव संनिवेश इति सिद्धम् ॥

मध्यमातर्जनीभ्यां तु कनिष्ठानामिके समे ॥ ७ ॥
अङ्कुशाकाररूपाभ्यां मध्यगे[8] परमेश्वरि ।
इयमाकर्षिणी मुद्रा त्रैलोक्याकर्षकारिणी ॥ ८ ॥

---

१ 'स्पृष्टौ' ग । २ 'ण्डेयं' ग । ३ 'मध्यगा' ग । ४ 'ष्ठा' ग । ५ 'के' ख । ६ 'यदि क्रियते चेन्महेशानि' ख । ७ 'तदा' ग । ८ 'मध्यमे' ग पाठः ।

समे इति प्राग्वत् स्वस्तिकाकारत्वेन । मध्यग इति अर्थात्कृत्वा ॥ ८ ॥

स्फुटाकारौ करौ कृत्वा तर्जन्यावङ्कुशाकृती ।
परिवर्तक्रमेणैव[1] मध्यगे तदधोगते ॥ ९ ॥
क्रमेण देवि तेनैव कनिष्ठानामिकादयः[2] ।
संयोज्य निविडाः सर्वा अङ्गुष्ठावग्रदेशतः ॥ १० ॥
मुद्रेयं परमेशानि सर्वावेशकरी स्मृता ।

कृत्वेति अन्यत्र अपि योजनीयम् । परिवर्तक्रमेणेति स्वस्तिकाकारत्वेनेत्यर्थः । तेनैव क्रमेणेति स्वस्तिकाकारा-धोगतत्वादिलक्षणेनेत्यर्थः । आदिशब्दः प्रकारे अङ्गुष्ठाविति अर्थात् पूर्ववदेव स्पष्टौ ॥

संमुखौ तु करौ कृत्वा मध्यमामध्यगेऽनुजे ॥ ११ ॥
अनामिके तु सरले तद्बहिस्तर्जनीद्वयम् ।
दण्डाकारौ तत्राङ्गुष्ठौ[3] मध्यमा नखदेशगौ[4] ॥१२॥
मुद्रैषोन्मादिनी नाम्नौ[5] क्लेदिनी सर्वयोषिताम् ।

कृत्वा अन्यत्र अपि सर्वत्र संबन्धनीयम् । मध्यमामध्यगे इत्यत्र मध्यशब्दो मध्यमवलक्ष्य येन अनयोरीषद्वक्रत्वेन अ-ङ्गुष्ठयोरेतन्नखदेशत्वं संगतं स्यात् । अनुजे कनिष्ठे । तर्ज-नीद्वयमिति अर्थात्सरलमेव ॥

अस्यास्त्वनामिकायुग्ममधः कृत्वाङ्कुशाकृति ॥१३॥
तर्जन्यावपि तेनैव क्रमेण विनियोजयेत् ।
इयं महाङ्कुशा विद्या[6] सर्वकामार्थसाधकी ॥१४॥

---

१ 'परिवर्त्य' ग । २ 'के अपि' ग । ३ 'ततोऽङ्ग' ख । ४ 'गौ' ख ।
५ 'नाम' ख । ६ 'मुद्रा सर्वकार्यार्थं' ग पाठः ।

अध इति अधोमुखं, पूर्वं हि सरलाकृतित्वादूर्ध्वमुखमासीत्; अत एव अङ्कुशाकृतित्वमस्य उक्तम्, तेनैव क्रमेणेति अधोमुखाङ्कुशाकृतित्वात्मना, एवं षण्णामपि अङ्गुलीनामङ्कुशाकृतित्वं स्यात् ॥ १४ ॥

सव्यं दक्षिणदेशं तु दक्षिणं सव्यदेशतः [1]।
बाहुं [2] कृत्वा महादेवि हस्तौ संपरिवर्त्य च ॥१५॥
कनिष्ठानामिके देवि युक्त्वा तेन क्रमेण तु ।
तर्जनीभ्यां समाक्रान्ते सर्वोर्ध्वमपि मध्यमे ॥ १६ ॥
अङ्गुष्ठौ तु महेशानि कारयेत्सरलावपि ।
इयं सा खेचरी नाम्ना [3] मुद्रा सर्वोत्तमा प्रिये ॥१७॥

सव्यमिति वाममाकृतिक्रियापेक्षया हस्तौ संपरिवर्त्येति योज्यम् । अन्यथा एवंबन्धः सुकरो न स्यात् । हस्ताविति अर्थात्पृष्ठतो विमिश्रिताङ्गुलीकौ । संपरिवर्त्येति स्वस्तिकाकारतयेत्यर्थः । तेन क्रमेणेति स्वस्तिकाकारलक्षणेनेति यावत् । सर्वोर्ध्वमपीत्यत्र युक्त्वेति संबन्धनीयम् । सरलावपीति अपिशब्देन तर्जनीमध्यमयोरपि सरलत्वमाक्षिप्तम् ॥१७

सर्वोत्तमत्वमेव अस्या दर्शयति

रचितैव महादेवि सर्वतेजोपहारिणी ।
बद्धयैवैतया देवि दृश्यते साधकोत्तमः ॥ १८ ॥
सर्वयोगिनिवृन्दैस्तु [4] ज्वलत्पावकसन्निभः ।

किंच

शाकिनीडाकिनीवृन्दै राकिणीलाकिनीगणैः ॥ १९ ॥

---

१ 'हस्ते तु दक्षिणं सव्यहस्ततः' ग । २ 'बाहू' ग । ३ 'नाम' ख । ४ 'योगिनीसर्ववृन्दैस्तु' ग पाठः ।

काकिनीहाकिनीभिस्तु ध्यातेयं परमेश्वरि ।

अत एव

एतया ज्ञातया देवि योगिनीनां भवेत्प्रियः ॥ २०॥

अतश्च शाकिन्यादीनां सर्वात्मना एतज्ज्ञातृत्वात् मया सर्वासां योगिनीनां समयपरिपाटी इयं दत्ता यदेवंजानानस्य अपि साधकस्य प्रियत्वं कार्यमिति ॥ २० ॥

तदाह

अतः[1] समयमुद्रेयं सर्वासां परिकीर्तिता ।

श्रीतन्त्रराजोक्तसमयमुद्रासमानकक्ष्यत्वं पुनरस्या दुरुपपादम् । इयं हि चाशपश्चाशत्सिद्धिः ! तत्र अपि अन्वयादि बहिष्कृतत्वे च ! अस्तीत्यलं बहुना ॥

ननु एवंमाहात्म्यवत्त्वादस्याः किं बन्धे कश्चित् नियमोऽस्ति न वेत्याह

प्रयतोऽप्रयतो वापि शुचौ देशेऽथवाशुचौ ॥२१॥

उत्थितो वोपविष्टो वा[2] चङ्क्रमन्निश्चलोऽथवा[3] ।

उच्छिष्टो वा शुचिर्भूत्वा भुञ्जानो मैथुने रतः ॥ २२ ॥

बध्नीयादिति शेषः ॥ २२ ॥

अस्या एव प्रकारान्तरमपि आह

मुद्राया मध्यमाङ्गुल्यौ परिवर्त्य क्रमेण तु ।

पार्थिवं[4] स्थानकं युक्त्वा सद्यः खेचरतां व्रजेत्[5] ॥२३॥

क्रमेण परिवर्त्यैति कनिष्ठानामावदेव स्वास्तिकाकारतया अवस्थाप्येत्यर्थः । पार्थिवं स्थानकमिति । यदुक्तं

'द्विगुणं पातितं वामं पादं दक्षिणमूर्ध्वतः ।

---

१ 'यतः' ग. । २ 'तु' ग. । ३ 'पिवा' ख. । ४ 'पार्थिवे स्थानके' ग. । ५ 'लभेत्' ख. पाठः ।

कृत्वान्योन्यतलस्थं तु वीरलक्षणमासनम् ॥'

इति । वीरश्च पार्थिव एव उच्यते इति आशयः । प्राणगमागमनिकानाममात्रमपि अजानानाः पार्थिवं स्थानकं मत्तगन्धकेन व्याचक्षाणाः स्थूलदृशोऽपि अस्थूलदृशो यदयं कायिकसंनिवेशोपदेशमात्रप्रवण एव प्रस्तावः । वीर्यानुसन्धानं तु सर्वासामेव समानमिति अत्रैव किमेवमभिधानेन, तच्च महात्मनां केषांचिदेव चेतसि स्थितमिति किं वागाडम्बरविडम्बनया तत्तत्संनिवेशविशेषवत्त्वेन च रौद्र्यादिशक्तिरूपत्वमपि आसां न न्याय्यमिति प्रागेव उक्तप्रायम् । श्रीरसमहोदधौ पुनः

'उभौ तु संनिरुद्धौ तु प्राणापानौ व्यवस्थितौ ।
तत्र मध्ये परं तत्त्वं भावाभावपदोद्भवम् ॥
तत्र मध्ये चितं कुर्यान्मुद्रैषा खेचरी परा ।
अन्यास्तु करबन्धेन सर्वशास्त्रेषु संस्थिताः ॥'

इत्यादिना तत्तच्छास्त्रान्तरोदितमाहात्म्या सर्वमुद्राप्राणितभूता अन्यैव खेचरी मुद्रा उक्तेति अस्थाने वृथा क्लिष्टमन्यैरिति अलं बहुना ॥ २३ ॥

परिवर्त्य करौ स्पष्टावर्धचन्द्राकृती[1] प्रिये ।
तर्जन्यङ्गुष्ठयुगलं युगपद्भावयेत्ततः[2] ॥ २४ ॥
अधःकनिष्ठावष्टब्धे मध्यमे विनियोजयेत् ।
तथैव कुटिले योज्य[3] सर्वाधस्तादनामिके ॥ २५ ॥
बीजमुद्रेयमचिरात्सर्वसिद्धिप्रवर्तकी[4] ।

कनिष्ठामध्यमयोश्च स्वस्तिकाबन्धोऽर्थसिद्धः । सर्वाध-

---

[1] 'स्पष्टावर्धचन्द्राकृति' ग. । [2] 'कारयेत्' ख. । [3] 'योज्ये' ख. । [4] 'र्तिनी' ख. पाठः ।

स्तादिति सर्वस्य तर्जन्यादियुग्मचतुष्टयस्य अपीत्यर्थः । अत एव अनयोरन्तर्निमग्नप्रायमेव अवस्थानम् ॥

मध्यमे कुटिले[1] कृत्वा तर्जन्युपरिसंस्थिते ॥ २६ ॥
अनामिकामध्यगते तथैवहि कनिष्ठिके ।
सर्वा एकत्र संयोज्या अङ्गुष्ठपरिपीडिताः ॥ २७ ॥
एषा तु प्रथमा मुद्रा योनिमुद्रेति [2]संस्मृता ।

कुलिटे इति अर्थादीषत् । तर्जन्योरपि अर्थसिद्धमीषत्कुटिलत्वम् , अन्यथाहि मध्यमयोः कथमेतदुपरिवर्तित्वं स्यात् । अनामिकेति अधोमुखकुटिलयोः । कनिष्ठिके इति अर्थात् स्वस्तिकबन्धावस्थिते । एकत्रेति निविडतयेत्यर्थः । प्रथमेति प्रधाना ॥

कश्च आसां प्रयोगावसर इत्याह

एता मुद्रा महेशानि त्रिपुराया मयोदिताः ॥ २८ ॥
पूजाकाले प्रयोक्तव्या यथानुक्रमयोगतः ।

यथानुक्रमेति आह्वानपूजनविसर्जनेष्वित्यर्थः । यथा उक्तं

'मुद्रां प्रदर्शयेत्पश्चात् त्रिधा त्रैकाल्यकर्मणि ।'

इति शिवम् ॥

इति श्रीमद्राजानकजयरथविरचिते
श्रीवामकेश्वरीमतविवरणे तृतीयः पटलः ॥ ३ ॥



---

१ 'लाकारतर्जे' ख. । २ 'या स्थिता' ग. पाठः ।

अथ

# चतुर्थः पटलः ।



परसंविदद्वैतज्ञानाभावनमन्तरेण पूजाजपमुद्रादि न किञ्चित् स्यादिति पाटलिकं संबन्धमागूरयन्ती 'श्रीदेव्युवाच' किमित्याह

भगवन्सर्वमाख्यातं मुद्राणां ज्ञानमुत्तमम् ।
वदेदानीं महादेव्या एकैकाक्षरसाधनम् ॥ १ ॥
महाज्ञान[1]प्रभावं च व्याप्तिं स्थानो[2]द्भवं लयम् ।
स्थूलसूक्ष्मवि[3]भागेन शरीरे परमेश्वर ॥ २ ॥

ज्ञानमिति विरचनं ज्ञानपूर्वकत्वात् तस्य । स्थानोद्भवं लयमिति सृष्टिस्थितिसंहारलक्षणम्, अथवा कुतः स्थानादुदेति कुत्र च लीना भवतीत्यर्थः ॥ २ ॥

एतदेवच्च प्रतिसमाधित्सुः 'श्रीभैरव उवाच'। तत्र यथोद्दिष्टानां क्रममपहाय प्राधान्यात् प्रथमं तावत् ज्ञानस्य स्वरूपं निरूपयितुमुपक्रमते

शृणु देवि महाज्ञानं सर्वज्ञानो[4]त्तरं परम् ।
येनानुष्ठितमात्रेण भवाब्धौ न निमज्जति ॥ ३ ॥

परं पूर्णमत एव महदनुत्तरं समरसितशक्तिशक्तिमदुभयं यत् ज्ञानं सर्वेषां शिवशक्तिनरात्मनां ज्ञानानामाभासानामवभासकत्वादुत्तमं, तदीदृक् प्रश्नकौशलातिशयशालित्वेन

---

१ 'नं' ग. । २ 'स्थानं भवं' ग. । ३ 'विभेदेन' ग. । ४ 'त्तमं' ग. पाठः ।

द्योतमाने शृणु सावधानमवधारय यत्परामर्शमात्रात् सर्वस्य विशेषेण सकलोऽयमख्यात्यात्मा मोहः शाम्येत् । ३ ।

तदेव आह

त्रिपुरा परमा शक्तिराद्या जातादितः प्रिये ।
स्थूलसूक्ष्मविभागेन[1] त्रैलोक्योत्पत्तिमातृका ॥ ४ ॥
कवलीकृतनिःशेषतत्त्वग्रामस्वरूपिणी ।

आदित इति उक्तगत्या आदिसिद्धात् चिदानन्दैकघनात् परमशिवात् तत्समवेतत्वादेव परमा सकलशक्तिनिकुरुम्बकाविभागस्वभावा अत एव नियतव्यपदेशासहिष्णुत्वादनाख्या सहजसिद्धत्वादेवच आद्या अत एव उपाध्यन्तरानुल्लासात् कवलितसकलतत्त्वकलनावभासा पराहंचमत्कारमयी विमर्शात्मका एका अपि तत्तदवभाससहस्रोल्लासनसामर्थ्यसतत्त्वा शक्तिः स्वमहिम्नैव बहिरुल्लिलासिषया परदशायामिच्छाज्ञानक्रियात्मना, सूक्ष्मदशायां वामाज्येष्ठारौद्रीलक्षणेन, स्थूलदशायां ब्रह्मविष्णवीशरूपेण विभागेन त्रयाणां पुराणामुक्तगत्या सृष्टिस्थितिसंहारापूरकाणां स्थानानां भावादनुगतार्थतया त्रिपुरा त्रैलोक्यस्य अतिभवाभवभवात्मकस्य उत्पत्तावबभासने मातृका जननी, अथच अम्बिकाशब्दव्यपदेश्या जाता तथात्वेन स्फुरितेत्यर्थः ॥

ननु एकं शान्तं परं ब्रह्मैव अस्ति, प्रपञ्चश्च अविद्याजनित इति किमेवंविधया अनया अभ्युपेतयेत्याशङ्क्य आह

तस्यां परिणतायां तु न कश्चित्पर इष्यते ॥ ५ ॥

तुर्ह्यर्थे । तस्यां हि शक्तावेव विद्यमानायां परः पालन-

---

१ 'ज्ञाना' ग. । २ 'विभेदेन' ग. पाठः ।

पूरणात्मत्वेन अभिमतो न कश्चिदिष्यते, परं ब्रह्म अपि एवं न सिध्येदित्यर्थः । इह हि शुद्धः प्रकाश एव तत्त्व-मिति नास्ति विमतिः, स च सविमर्श एव न्याय्यः । अन्यथाहि तत्तदर्थावभासकत्वेऽपि स्फटिकादेर्जडादस्य भेदो न स्यात् । यदाहुः

'स्वभावमवभासस्य विमर्शं विदुरन्यथा ।
प्रकाशोऽर्थोपरक्तोऽपि स्फटिकादिजडोपमः ॥'

( ई० प्र० १।५।११ )

इति । स च न अस्य स्वरूपातिशयः कश्चित्, अपितु प्रकाशमानतायामनपेक्षितपरोपयोगं स्वप्रकाशं स्वमेव रू-पम् । तदेवच बाह्यमर्थं वासनामविद्यां वा उपेत्य तत्त-दाभाससहस्रोल्लासनसामर्थ्यं नाम स्वातन्त्र्यमिति उक्तं येन सर्वमिदं सिद्ध्येत् । अविद्यादेर्हि भेदे एकं ब्रह्मेति हीयेत, अभेदे च ब्रह्मैवेति सर्वं व्याहन्येतेत्येवंविधस्वातन्त्र्यमा-त्ररूपं ब्रह्मैव सर्वमिति ॥ ५ ॥

शक्तिमन्तरेण नास्ति काचित् गतिरित्याह

**परो हि शक्तिरहितः शक्तः कर्तुं न किंचन ।**

तस्मादवश्येष्टव्या शक्तिरित्याह

**शक्तस्तु परमेशानि शक्त्या युक्तो यदा भवेत् ॥६॥**

तदेति अध्याहार्यम् । भवेदिति परः प्रकाशः ॥ ६ ॥

किंच

**शक्त्या विना शिवे सूक्ष्मे नाम धाम न विद्यते ।**

सूक्ष्मे इति स्वप्रकाशत्वादवेद्ये इत्यर्थः । स्वप्रकाशो हि परः श्रेयोरूपः प्रकाशः । स्वप्रकाशत्वादेव कदाचि-दपि परप्रकाश्यतामासादयितुं न उत्सहते इति अस्य

नाम सविकल्पकं धाम निर्विकल्पकं च ज्ञानं न विद्यते प्रमात्रेकरूपत्वात् न एतत्प्रमेयतां यायादित्यर्थः । अज्ञेयत्वे च अस्य उपदेश्यत्वभावनाद्ययोगात्कृतम् 'आत्मा ज्ञातव्यो मन्तव्यो निदिध्यासितव्यश्च' इत्यादिशास्त्राडम्बरेणेति तूष्णीमेव आसितव्यं शाक्तं रूपं वा अभ्युपगन्तव्यं यदयं वस्तुतः परप्रमात्रेकरूपोऽपि स्वस्वातन्त्र्यादेव ताद्रूप्यादपरिच्युतमेव निजं रूपमुपदेश्यत्वादिसिद्धये प्रमेयतामापादयति येन लौकिकालौकिकः सर्वोऽयं व्यवहारः सिध्येत् । यदाहुः

'स्वातन्त्र्यात्तु निजं रूपं बोद्धृरूपादविच्युतम् ।
उपदेशतदावेशपरमार्थत्वसिद्धये ॥
बोध्यतामानयन्देवः स्फुटमेव विभाव्यते ।' (तं०१२।११)

इति ॥

एवं ज्ञेयतामापन्नेऽपि तस्मिन् परस्मिन् प्रकाशे शक्तिरेव सर्वार्थक्रियाकारिणीत्याह

**ज्ञातेनापि महेशानि कर्म शर्म न किञ्चन ॥ ७ ॥**

परं प्रकाशमपेद्य हि तदतिरिक्तं न किञ्चिदपि प्रकाशेतेति सर्वं प्रकाश एवेति तस्यां दशायां किं नाम साधकस्य शर्मावहं कर्म स्यादिति शक्तिदशानुप्रवेश एव यतनीयं येन सर्वज्ञतादिनिखिलसिद्ध्युदयः स्यात् । यदाहुः

'आद्यायां तु तुटौ सर्वं सर्वतः पूर्णमेकताम् ।
गतं किं तत्र वेद्यं वा कार्यं वा व्यपदेशभाक् ॥
अतो भेदसमुल्लासकलां प्राथमिकीं बुधाः ।
चिन्वन्ति प्रतिभां देवीं सर्वज्ञत्वादिसिद्धये ॥' (तं०१०।२१०)

इति ॥ ७ ॥

अत एव न अत्र ध्येयता अपि युज्यत इत्याह

ध्यानावष्टम्भकाले तु न रतिर्न मतिः[1] स्थितिः ।

ध्यानं हि प्रतिनियतध्येयविषयनिष्ठमैकात्म्यं, तच्च अभेदप्रधानम् । भिन्ने हि वस्तुनि जनो रज्यते, तत्रैवच अस्य स्थैर्यात् तद्विषयं यथायथं प्रकृष्टं ज्ञानं जायते । नच अत्र एतत् भवितुमर्हति परिपूर्णप्रकाशैकघनत्वात् ध्यातृध्येयभावाघटनादिति पराहंपरामर्शचमत्कारमयी शक्तिरेव अस्मद्दर्शने विश्रान्तिधामतया पश्यन्त्या येव स्पन्दस्फुरत्तासारोर्मिहृदयसद्भावसंकर्षिणीत्रिपुरादिशब्दैस्तत्र तत्र सर्वत्र उद्घोष्यते ॥

एवमियमेव सा परप्रमात्रैकात्म्येन वर्तमाना वाच्यवाचकात्मनो निखिलस्य विश्वस्य सृष्टिस्थितिसंहाराद्यवभासिकेत्याह

प्रविश्य परमार्णान्तः सूक्ष्माकारस्वरूपिणी ॥ ८ ॥
कवलीकृतनिःशेषबीजाद्याङ्कुरतां गता[2] ।
वामा शिखा[3] ततो ज्येष्ठा शृङ्गाटाकारतां गता ॥९॥
रौद्री तु परमेशानि जगद्ग्रसनरूपिणी ।

परमार्णान्तरनुप्रवेशादेव परप्रमात्रैकरूपत्वात् सूक्ष्माकारस्वरूपिणी अवेद्या तत्समवेतत्वादेवच आद्या स्वस्वरूप एव अवस्थानाच्च स्वात्मसात्कृतनिःशेषकारणप्रपञ्चा अपि सा परा शक्तिः स्वस्वातन्त्र्यमाहात्म्यात् बहिरुल्लिलसिषुर्विश्वप्रसरोन्मुखतया अङ्कुरतां गता कुण्डलिनीरूपतामादधाना कवलितं सकलं जगत् वमन्ती वामा, तदनु उच्चि-

---

१ 'मनः' ग. । २ 'बीजाङ्कुरतया स्थिता' ग. । ३ 'शिवा' ग. पाठः ।

ष्ठापयिषया शिखा कालाग्निपर्यन्तनिखिलाध्वदण्डरूपस्पष्टरे-खाकारतामधितिष्ठन्ती ज्येष्ठा पुनरपि उद्वेष्टनक्रमेण जग-त्संजिहीर्षुरिच्छादिशक्तित्रयसामरस्यात्मकशृङ्गाटाकारतामु-द्भावयन्ती रौद्री चेत्युच्यते इति स्वात्मभित्त्युल्लिखितसृ-ष्टिस्थितिसंहारं धामत्रयमशेषवर्णानुप्राणकमादिवर्णमवभास-यन्तीत्यर्थः । यदुक्तं

'ऊर्ध्वे तु संस्थिता सृष्टिः परमानन्दनन्दि[1]नी ।
पीयूषवृष्टिं वर्षन्ती बैन्दवी परमा कला ॥
अधः संहारकृज्ज्ञेयो महानग्निः कृतान्तकः ।
घोरज्वालावलीयुक्तो दुर्धर्षो ज्योतिषां निधिः ॥
तयोर्मध्ये परं तेज उभयानन्दसुन्दरम् ।
अवतारः स विज्ञेय उभाभ्यां व्यापकः शिवः ॥
परस्परं समाविष्टौ चन्द्रेऽग्निर्ष्टीटिभे शशी ।
चन्द्रः सृष्टिं विजानीयादग्निः संहार उच्यते ॥
अवतारो रविः प्रोक्तो मध्यस्थः परमेश्वरि ।'

इति ॥

न केवलमेवं वाचकात्मकमेव विश्वमवभासयति यावत् वाच्यात्मकमपीत्याह

ए[2]वं सा परमा शक्तिरेकैव परमेश्वरी ॥ १० ॥
त्रिपुरा त्रिविधा दे[3]वी ब्रह्मविष्णवीशरूपिणी ।
ज्ञानशक्तिः क्रियाशक्तिरिच्छाशक्त्यात्मिका प्रिये ॥११॥
त्रैलोक्यं संसृजति ………………… ।

त्रिविधेति सृष्टिस्थितिसंहाराद्यात्मिकेत्यर्थः । एतदेव च ब्रह्मविष्ण्वीशरूपिणीत्यादिना उपोद्बलितम्, एवमपि अना-

---

१ 'रूपिणी' ख. । २ 'एषा' ग. । ३ 'देवि' ग. पाठः ।

स्यात्परमस्वरूपादपरिच्युतैवेति उक्तं परमेति एकेति परमेश्वरीति दैवीति । त्रैलोक्यमिति भवाभवादिरूपम् । संसृजतीति दर्पणनगरन्यायेन स्वस्वरूपादपरिच्युतमपि अतिरिक्तायमानतया अवभासयतीत्यर्थः ॥

अत एवच अस्या अनुगतार्थमिह अभिधानमित्याह

..................अस्मात्[1] त्रिपुरा परिकीर्तिता[2] ।

अस्मादिति त्रयाणां पुराणां संसर्जनात्, तेन त्रीणि पुराणि संसृजतीति त्रिपुरेत्युक्तेत्यर्थः ; नतु तिसृणां शक्तिव्यापिनीसमनानां पुरा पूर्वभाविनीति व्याख्येयं 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ( २ । २ । ११ ) इति अव्ययानां षष्ठीतत्पुरुषनिषेधात् । तत्रापि पुराशब्दस्य देशकालमात्राभिधायित्व एव निपातनात् द्रव्यवाचित्वासंभवात् तदपरामर्श एवेति अलं बालालापपर्यालोचनेन ॥

एवमन्तरपि अस्या लयोदयावभिधातुमाह

यदोल्लसति शृङ्गाटपीठात्कुटिलरूपिणी ॥१२॥
शिवार्कमण्डलं भित्त्वा द्रावयन्तीन्दुमण्डलम् ।
तदुद्भवामृतस्यन्दमं[3]दिरानन्दनन्दिता ॥ १३ ॥
कुलयोषित्कुलं त्यक्त्वा परं पुरुषमेति सा ।
निर्लक्षणं निर्गुणं च कुलरूपविवर्जितम् ॥ १४ ॥

यदा खलु इयमेव प्राणदशाधिशायिनी कुलपदमवलम्बमाना परा शक्तिः शृङ्गाटपीठात् प्रसराकरादिशब्दव्यपदेश्यात् जन्माधारात् कुटिलरूपिणी अनच्कहकलाकारा अपि

---

१ 'एषा' ग. । २ 'र्त्यते' ग. । ३ 'परमा' ग. पाठः ।

शिवपदप्राप्तिकारित्वात् शिवमर्कमण्डलं प्राणं भित्त्वा इन्दुमण्डलमपानमपि द्रावयन्ती स्वरसप्रवृत्तं दक्षवामलक्षणं वाहद्वयं घट्टयित्वा तद्घट्टनादेव उद्भूतेन मध्यवाहसततसुलभेन अमृतस्यन्दप्रायेण मदिरानन्देन नन्दिता सती उदानवाहक्रममात्रस्य दण्डाहतभुजगन्यायेन स्पष्टाकारतया उल्लसति ऊर्ध्वं प्रसरति, तदा कुलं शरीरमपहाय अकुलपदावस्थितं परं पूर्णम्, अत एव निर्लक्षणमसाधारणनियतरूपोपग्राहकधर्मबहिष्कृतत्वादनियताकारम्, अत एव कुलेन शरीरेण तद्धर्मेण रूपेण च विवर्जितं निरावरणस्वभावम्, अत एव निर्गुणं पुरुषं परं प्रमातारमेति तदैकात्म्यमासादयतीत्यर्थः ॥ १४ ॥

नच अत्रैव अस्या विश्रान्तिरित्याह

ततः स्वच्छन्दरूपा तु परिभ्रम्य[1] जगत्पुनः ।
तेने[2] चारेण संतुष्टा पुनरेकाकिनी सती ॥ १५ ॥
रमते........................................... ।

पुनरपि ततः पराकाशरूपादकुलपदात् स्वच्छन्दरूपा परानपेक्षं स्वरसत एव सृष्टिक्रमेण समुल्लसन्ती कुललक्षणं जगदाक्रम्य तेन सृष्ट्यात्मना चारेण कुलभूमिकानुभवसमुद्भूतं सन्तोषं भजमाना अपि पुनः स्वाच्छन्द्यादेव उर्ध्वचारात्मना संहारक्रमेण कुलभुवमपहाय अलकुगगनमवगाहमाना एकाकिनी विश्वोत्तीर्णं रूपमाददाना सती रमते तत्रैव परमशिवेन सह सामरस्यमासादयेत्

'अकुलं तु कुले त्यक्त्वा कुलं चाकुलगोचरे ।'

इतिदृशा प्रतिक्षणमाजवञ्जवीभावेन सृष्टिसंहारक्रमावलम्ब-

---

१ 'परिभ्राम्य' ग. । २ 'तेनाचारेण' ग. पाठः ।

नेन लयोदयमयतयैव प्रस्फुरन्ती न कस्यचिदपि प्रतिनियतेन रूपेण व्यक्ततामेतीत्यर्थः। अथच अत्र वेश्यावृत्तान्तोऽपि कटाक्षीकृतः इति उपमालङ्कारध्वनिः। सापि पर्यन्ते क्षीणवेश्यावृत्ता एकाकिनी सती तपस्विनीप्राया अपि प्रच्छन्नं रमते इति। कुलयोषिदपि एवंविधेति विरोधोऽपि ध्वनित इति आस्तां, किमनेन अप्राकरणिकेन॥

एवमियं कारणप्रभृतिभिरपि अनुपलब्धानियतस्वरूपा स्वस्वातन्त्र्यादेव बहिरुल्लसन्ती नियतेन रूपेण व्यक्ततामापन्ना सर्वोपसेव्यतामासादयतीत्याह

......सेयमव्यक्ता त्रिपुरा व्यक्तिमागता।
तत्त्वत्रयविनिर्दिष्टा वर्णशक्तित्रयात्मिका॥ १६॥

सेयं पराशक्तिरेवमव्यक्ता अपि तत्त्ववर्णशक्तित्रयात्मना व्यक्तिमागता सती अस्मद्दर्शनोपास्या श्रीत्रिपुरेत्युच्यते इति वाक्यार्थः॥ १६॥

एतदेव विभज्य दर्शयति

वागीश्वरी ज्ञानशक्तिर्वाग्भवा[३] मोक्षरूपिणी।
कामराजा[४] कामकला कामरूपा क्रियात्मिका॥ १७॥
शक्तिबीजा[५] परा शक्तिरिच्छैव विषरूपिणी[६]।

मोक्षकामविषाणां तत्त्वानां त्रयं वाग्भवकामराजशक्तिबीजानां वर्णानां ज्ञानक्रियेच्छानां शक्तीनां च वाग्भवादिबीजानुगुण्येनैवच अत्र ज्ञानशक्त्यादीनां विशेषणत्रयमुपात्तं वागीश्वरीति कामकलेति परा शक्तिरिति च॥

एवमायातिक्रमेण इयं परिज्ञाता परं पुरुषार्थं साधयती-

१ 'स्वयं' ग.। २ 'व्याप्तिं' ग ३ 'वाग्भवे' ग.। ४ 'राजे' ग.। ५ 'बीजे' ग.। ६ 'शिव' ग. पाठः।

त्याह

एवं देवी त्र्यक्षरी[1] तु महात्रिपुरसुन्दरी ॥ १८ ॥

पारम्पर्येण विज्ञाता भवबन्धविमोचिनी[2] ।

न केवलमेवं यावत् तास्ताः सिद्धीरपि आविष्करोतीत्याह

संस्मृता पापहरणी जप्ता मृत्युविनाशिनी ॥ १९ ॥

पूजिता दुःखदारिद्र्यव्याधिदौर्भाग्यघातकी[3] ।

हुता विघ्नौघशमनी ध्याता सर्वार्थसाधकी[4] ॥२०॥

अनेन च अस्या महाप्रभावत्वमुक्तम् ॥ २० ॥

एवमेकप्रघट्टेनैव प्रश्नपञ्चकं समाधाय अवशिष्टं षष्ठमपि प्रतिसमाधातुमुपक्रमते

एतस्याः शृणु देवेशि बीजत्रितयसाधनम् ।

तदेव आह

धवलाम्बरसंवीतो धवला[5]म्बरमध्यगः ॥ २१ ॥

पूजयेद्धवलैः पुष्पैर्ब्रह्मचर्यरतो नरः ।

धवलैरेव नैवेद्यैर्दधिक्षीरौदनादिभिः ॥ २२ ॥

एतदभावे

संकल्पधवलैर्वापि........................ ।

तत्रापि पक्षान्तरमाह

........................यथाकामं[6] यथा लभेत् ।

यथेच्छं यथालाभं वेत्यर्थः ॥

एवं

संपूज्य परमेशानि ध्यायेद्वागीश्वरीं पराम् ॥ २३ ॥

---

१ 'री' ग. । २ 'च' ग. । ३ 'घातिनी' ग. । ४ 'साधिका' ग. । ५ 'ला-वास' ग. । ६ 'कामफलप्रदाम्' ग. पाठः ।

बीजरूपामुल्लसन्तीं चिदानन्दप्रबोधिनीम् ।
ब्रह्मग्रन्थिं विनिर्भिद्य जिह्वाग्रे दीपरूपिणीम् ॥२४॥

एवं पूजानन्तरं साधकः

'मेढ्रस्याधः कुलो ज्ञेयो मध्ये तु विषसंज्ञकः ।
मूले तु शाक्तः कथितो बोधनादप्रवर्तकः ॥
अग्निसंज्ञस्ततश्च.......................... ।'

इत्यत्र मेढ्रशब्दोक्तानङ्गपदोद्धारं कामराजपर्यायं जन्माधारमूलादपि अग्निसंज्ञस्य अधोऽर्थात् कुलस्य ऊर्ध्वं निर्देशे

'वह्नेर्विषस्य मध्ये तु ब्रह्मग्रन्थिरुदाहृतः ।
सर्वार्थशास्त्रवेत्ता च कविर्भवति तद्गतः ॥'

इत्युक्त्या वह्निविषाधारद्वयमध्यवर्तिनं जन्माधारमूलावस्थितं ब्रह्मग्रन्थिं शाक्तमाधारविशेषं विशेषेण सावष्टम्भं निःशेषेण नतु किंचित्त्वेन भित्त्वा उल्लसन्तीं परां मध्यशक्तिं तत्त्वादेव चिदानन्दप्रबोधिनीं बोधनादप्रवर्तिकां बीजरूपां वागीश्वरीं

'वागीश्वरी ज्ञानशक्तिर्वाग्भवे बीजरूपिणी ।'

इत्युक्त्या ज्ञानशक्तिस्फारसारोच्चरद्वाग्भवाविभिन्नस्वरूपां जिह्वाग्रे दीपरूपिणीं तद्वत् ज्वलन्तीं ध्यायेत् तदेकतानतया अनुसन्दध्यादित्यर्थः । '[2]इतोऽनङ्गपदावधि' इति तु अपपाठः । ब्रह्मग्रन्थिविभेदनेनैवहि एतदर्थोऽधिगतः, अत एव इहैव बोधग्रन्थिं नादात्मचिता विभेद्य ऊर्ध्वं इत्याद्यपि न साधूक्तम् ॥

एवमस्य किं स्यादित्याह

चिन्तयेद्भ्रष्टहृदयो ग्राम्यो मूर्खोऽतिपातकी ।

---

'ततोऽनङ्गपदावधि' ग । २ 'ततोऽनङ्ग' ग । 'वधिः' ख. पाठान्तरम् ।

शठोऽपि यः पादमेकं सुस्पष्टं वक्तुमक्षमः ॥ २५ ॥

जडो मूकोऽपि दुर्मेधा गतप्रज्ञोऽपि नष्टधीः ।

सोऽपि संजायते वाग्मी वाचस्पतिरिवापरः ॥ २६ ॥

एवंविधोऽपि यश्चिन्तयेत्, सोऽपि वाग्मी जायते इति अन्वयः। मूक इति हतवागिन्द्रियः । दुर्मेधाः पापबुद्धिः । गतप्रज्ञो मूलादेव असञ्जातप्रतिभः । नष्टधीः संजातत्वेऽपि कुहकप्रयोगादिना विनाशितप्रज्ञः ॥ २६ ॥

अपरवाचस्पतित्वमेव आचष्टे

सत्पण्डितघटाटोपजेताऽप्रतिहतप्रभः ।

षट्तर्कपदवाक्यार्थशब्दालङ्कारसारवित् ॥ २७ ॥

वातोद्धूतसमुद्रोर्मिमालातुल्यैरुपन्यसेत् ।

तुल्यैरिति अर्थात् वाक्प्रपञ्चैः ॥

तथा

सुकुमारतरस्फाररीत्यलङ्कारपूर्वकैः ॥ २८ ॥

पदगुम्फैर्महाकाव्यकर्ता देवेशि जायते ।

किंच

वेदवेदान्तसिद्धान्तवेदाङ्गज्ञानपारगः ॥ २९ ॥

ज्योतिःशास्त्रेतिहासादिमीमांसास्मृतिवाक्यवित् ।

पुराणरसवादादिगारुडानेकमन्त्रवित् ॥ ३० ॥

पातालशास्त्रविज्ञानभूततन्त्रार्थतत्त्ववित ।

विचित्रचित्रकर्मादिशिल्पानेकविचक्षणः ॥ ३१ ॥

---

१ 'पदं स्पष्टमक्षरं वक्तुं' ग.। २ 'मूर्खोऽतिदुर्मेधा ...... विनष्टधीः' ग.। ३ 'सत्तर्क' ग.। ४ 'वाताहत' ग। ५ 'वृत्तालंकारपूर्वकम' ग. पाठः ।

महाव्याकरणोदारशब्दसंस्कृतसर्वगीः ।
सर्वभाषारुतज्ञान[1]समस्तलिपिकर्मवित्[2] ॥ ३२ ॥
नानाशस्त्रार्थशिल्पादि[3]वेदवेदाङ्गविश्रुतः ।
सर्ववाङ्मयवेत्ता च सर्वज्ञो देवि जायते* ॥ ३३ ॥

सर्वज्ञो जायते इत्यत्र वेदपारगत्वादि सर्वं हेतुः ॥
एवं वाग्भवमुपसंहृत्य कामराजमवतारयति

[4]यदा कामकलारूपा मदनाङ्कुरगोचरे ।
[5]तरुणारुणबिम्बार्ककिरणाभा महेश्वरि ॥ ३४ ॥
स्फुरद्दीपशिखाकारा बिन्दुधाराप्रवर्षिणी ।
समस्तभुवनाभोगकवलीकृतजीविता ॥ ३५ ॥
महास्त्रमहिमाक्रान्तिध्वस्ता[6]हङ्कृतिभूमिका ।
क्रमेण च ततोऽनङ्गपर्यन्तात्[7]प्रोल्लसन्त्यपि ॥ ३६ ॥
शरीरानङ्गपर्यन्तमेकैक[8]मुभयात्मिका ।
ततो भवति देवेशि सर्वशृङ्गारमानिनाम् ॥ ३७ ॥
रागिणां साधको देवि बाधको मदनाधिकः ।

इह खलु येन केनचित् यदा मध्यशक्तिरेव निजाधारात् प्रथमस्पन्दतया उल्लसन्ती कामकलारूपा

'स शिरोरहितः कामः कामिनीहृदयालयः ।'

इत्युक्तस्वरूपानच्कहकलात्मिका नवोदितारुणवत् बिम्बफल-

---

१ 'ज्ञानी' ग. । २ 'कृत्' ग. । ३ 'शिक्षादिवेत्ता भुवनविश्रुतः' ग. ।
* 'एवमेतन्महादेवि वाग्भवस्य तु साधनम् । ततस्तु शृणु वक्ष्यामि कामराजस्य साधनम् ॥ ग. अधिकः ॥ ४ 'तथा' ग. । ५ 'उद्यदादित्यबिम्बाभा समुज्ज्वलवपुः प्रिये' ग. । ६ 'स्वस्थाहं' ग. । ७ 'पर्यन्तं' ग. । ८ 'एकैवं' ग. पाठः ।

वत् दीप्तदीपशिखावच्च स्फुरदरुणाकारा अनवरतमार्तवधारासारं वर्षन्ती यत्र कुत्रचित् दूरदेशादौ स्वमहिमाक्रान्त्यैव विवशीकृतनिखिलसाध्यजीविताहङ्कारा यस्याः कस्याश्चन साध्याया योषितो मदने तदुदयहेतुभूतायां योनौ यस्तदन्तर्वर्ती कुटिलाकारः

'तत्रैव संस्थितं ध्यायेद्बिन्दुरूपं मनोभवम् ।
प्रत्यग्रारुणसंकाशं किरणानेकसंकुलम् ॥
तस्योपरि शिखा सूक्ष्मा कामशक्तिर्महौजसी ॥'

इत्याद्युक्त्या बिन्दुशिखात्मा घण्टिकाप्रायोऽङ्कुरः, तस्य अग्रगोचरे कंचित्कालमनागतावेक्षणतन्त्रयुक्त्या

'चिन्तिता योषितां योनौ............... ।' (४ । ४२)

इति उत्तरवाक्यमपेक्ष्य चिन्तिता क्रमात्क्रमं साध्यसाधकयोरेकैकं परस्परस्य प्राणशक्त्योः समरसितत्वेन मेलनादुभयात्मिका ; ततोऽपि अनङ्गस्य मदनस्य पर्यन्तादङ्कुराग्रात् साध्यशरीर एव अनङ्गस्य अकुलगगनस्य पर्यन्तं द्वादशान्तं यावत् प्रकर्षेण

'जपः प्राणसमः कार्यः.................. ।'

इति नीत्या कामराजोच्चाराविभिन्नस्वरूपतया उल्लसन्ती पौनःपुन्येन चिन्तिता, तत एवंचिन्तनात् हेतोरन्येषां रागिणामभिष्वङ्गमात्रमुद्वहतामत एव शृङ्गारमानितां ननु साक्षाच्छृङ्गारिणां 'वयमपि एवंविधा एव किं न भवामः' इत्यादिदौर्मनस्यजननात् बाधकः स साधको मदनाधिको भवतीति समुदायार्थः ॥

यतः

तद्दृष्टिपथगा नारी सुरी वा [1]यदिवासुरी ॥३८॥

---

[1] 'वाप्यथवासुरी' ग. पाठः ।

विद्याधरी किन्नरी वा यक्षनागाङ्गनाथवा ।
प्रचण्डतरभूपालकन्यकाः सिद्धकन्यकाः ॥ ३९ ॥
ज्वलन्मण्डलदुष्प्रेक्ष्यमदनोत्तप्तमानसाः ।
क्लिन्नाः प्रचलिताङ्ग्यस्तु विमूढा मदविह्वलाः ॥४०॥
निवेदितात्मसर्वस्वा जायन्ते वशगाः प्रिये ।

अत्रैव पक्षान्तरमाह

चलज्जलेन्दुसदृशी बालार्ककिरणारुणा ॥४१॥
चिन्तिता योषितां योनौ संक्षोभयति तत्क्षणात् ।

चिन्तितेति अर्थात् कामकलारूपा मध्यशक्तिः । चलज्जलेन्दुसादृश्येऽपि बालार्ककिरणारुणत्वं विशेषः, तस्य हि शैत्यं स्वाभाविको गुणः ॥

तथा

सैव सिन्दूरवर्णाभा हृदये चिन्तिता सती ॥ ४२ ॥
संमोहोन्मादनावेशचित्ताकर्षकरी स्मृता ।

सैवेति यथोक्तरूपा मध्यशक्तिः, हृदये इति अर्थात् योषिताम् ॥

नियोजिताथवा मूर्ध्नि वर्षन्ती रक्तबिन्दवः ॥ ४३ ॥
धारणासंप्रयोगेण करोति विवशं जगत् ।

रक्तबिन्दूनिति वाच्ये रक्तबिन्दव इति पैशः पाठः । धारणासंप्रयोगेणेति

---

१ 'यक्षी' ग. । २ 'मदनदुष्प्रेक्ष्यदहनो' ग. । ३ 'पाङ्गा' ख. । ४ 'वशगा देवि जायते' ग. । ५ 'विष्ट' ग. । ६ 'बिन्दुभिः' ग. । ७ 'वशगं' ग. पाठः ।

'स शिरोरहितः कामः कामिनीहृदयालयः ।
नेत्रारूढेन तेनाथ शक्तिर्दृष्टिं समाहरेत् ॥'

इत्याद्युक्तयुक्त्या चक्षुरादीन्द्रियप्रणालिकया परपुरप्रवेशाद्यात्मनेत्यर्थः ॥

अत्रैव रहस्यत्वात् गूढार्थतया प्रयोगान्तरमपि वक्तुं प्रतिजानीते

अथान्यं सं[1]प्रवक्ष्यामि प्रयोगं भुवि दुर्लभम् ॥४४॥
येन विज्ञातमात्रेण साधको मदनायते ।

दुर्लभमिति एवमाधिगन्तुमशक्यमित्यर्थः ॥

तदेव आह

कामस्थं काममध्यस्थं कामोदरपुटीकृतम् ॥ ४५ ॥
कामेन साधयेत्कामं कामं कामेषु निक्षिपेत् ।
कामेन कामितं कृत्वा कामस्थः क्षोभये[2]ज्जगत् ॥४६॥

इह खलु कामेन प्राथमिकशाक्तपरिस्पन्दसमुल्लासप्रबुभुत्सया कामस्थः कामे तदुदयस्थाने जन्माधारे तिष्ठंस्तत्रैव विगलितवेद्यान्तरतया बद्धानुसन्धानः साधकः काममध्यस्थं कामस्य योनेर्मध्ये

'... ....................मदनाङ्कुरगोचरे ।' (२।३४)

इति अङ्कुरशब्देन उक्ते काकचञ्चुपुटाकारे स्पर्शलिङ्गे स्थितमभिव्यज्यमानं कामं च

'स शिरोरहितः कामः.................. ।'

इत्याद्युक्तेरनच्कहकलात्मकं मध्यप्राणशक्तिरूपं कामेन काम-

---

१ 'शृणु वक्ष्यामि' ग. । २ 'ध्रुवम् । एतद्धि देवदेवेशि कामराजस्य साधनम् । प्रवक्ष्यामि समासेन शक्तिबीजस्य साधनम्' ग. अधिकः पाठः ।

राजबीजेन कामितं तदुच्चाराविभिन्नस्वरूपतया कान्तं, कामोदरपुटीकृतं कस्य शिरसः

'कला सप्तदशी या सा अमृताकाररूपिणी ।'

इत्युक्तस्वरूपाया अमायाश्च उदरे घण्टिकास्थाने तालुग्रन्थेदुर्भेद्यत्वात् पुटीकृतं संपुटीकृतं तत्रैव क्षणस्य निरुद्धं सन्तं, कामस्थं के शिरसि अमनं तत्र तिष्ठन्तं द्वादशान्तगमनशीलं तत्र प्राप्तं, कामं निश्चितं साधयेत् सिद्ध्युन्मुखं संपादयेत् । ततः कामेषु प्रवेशनिर्गमनलक्षणसंचारापायतया तच्छब्दव्यपदेश्येषु

'नेत्रारूढेन तेनाथ शक्तिदृष्टिं समाहरेत् ।'

इत्यादिनीत्या साध्यस्य नेत्रादिषु निक्षिपेत् स्वनेत्राभ्यां निर्गतं साध्यनेत्रयोरनुप्रविष्टं साध्यनेत्राभ्यां च निर्गतं स्वनेत्रयोरनुप्रविष्टं ध्यायेदित्येवं पौनःपुन्येन दोलायन्त्रक्रमेण गमागमौ न केवलं नियतमेव कंचन साध्यं यावत् जगत् जायमानं जन्तुचक्रमक्रमादेव क्षोभयेत् स्वात्मनि विश्रान्तितिरस्कारपुरःसरीकारेण स्वोन्मुखतया वैवश्यं नयेदित्यर्थः । एतच्च अन्यैः 'शब्दैरेव शब्दान्व्याचष्टे' इति-भङ्ग्या कष्टकल्पनया पर्यवसितार्थं बहुशो व्याख्यातम् । तदत्र अन्यत्र च सचेतस एव अन्तरज्ञा इति त एव प्रमाणम् । तथाच पूर्वाचार्या अपि आहुः

'आश्रीदीपकनाथतो ह्यगणितैरद्यापि वृत्तिः कृता
यस्यान्यैश्च करिष्यते गुरुवरैः स्वस्वाशयौचित्यतः ।
देवि त्वच्चरणाब्जरेणुशरणः कामस्थमित्यादिक-
श्लोकस्यार्धयुतस्य तस्य सुकृती कोऽप्यर्थवित्तत्त्वतः ॥'

इति । यन्त्रभङ्ग्या व्याख्यानेऽपि न कश्चित् दोषः । यत् यं कंचन साध्यं कामे

'क्ष-ल-उ-अः पूर्वगतास्तत्संयोगेन जायते ।

'अयं कामः समाख्यातः................ ॥'

इत्युक्ते ह्लींकारे आसनरूपे

'आदिकामस्य देवेशि साध्यार्णं शिरसि न्यसेत् ।'

इत्युक्त्या तच्छिरसि नामाक्षरन्यासमात्रेण अवतिष्ठमानं

'अं-य-आस्वपुराद्देवि तृतीयस्थानवासिनः ।

तेषां संयोगरूपेण मन्मथो जायतेऽनघे ॥'

इति मन्मथशब्दव्यपदिष्टस्य द्वितीयस्य कामस्य क्लींकारस्य मध्ये स्थितं ककारलकारयोरन्तर्लिखितम्

'अंपूर्वभूतसंख्याकमृपरं च तथैव हि ।

आभ्यां संयोगतो देवि कन्दर्पस्तु प्रजायते ॥'

इति कन्दर्पशब्दवाच्येन तृतीयेन कामेन एकारद्वयात्मना उदरे गर्भे षट्कोणाकारतया अवस्थानेन पुटीकृतं संपुटितं च कृत्वा कामेषु यथोक्तकन्दर्पाख्यकामनिर्वर्तितेषु षट्सु कोणेषु

'क्षहपूर्वार्णयुगलं रसोत्थं मकरध्वजः ।'

इति मकरध्वजप्रतिपादितं चतुर्थं कामं ब्लंकारं लिखेदित्यर्थः । एतत् कामचतुष्टयमपि

'ह-थ-ल-उ-पूर्वकस्थं जायते च मनोभवः ।'

इति मनोभवाख्येन पञ्चमेन कामेन स्त्रींकारेण साधयेत् उदरान्तःप्रक्षिप्तं साधयेदित्यर्थः । एवमेतत् परिनिष्पन्नं यन्त्रं कामेन प्राथमिकेनैव ह्लींकारेण

'अथ चक्रस्य चाधारं पुनः कामं प्रदापयेत् ।'

इतिश्रुतेराधारभूतेन शिरसि धारणात् राजायमानतया कामितं कान्तं कृत्वा कामं निश्चितमेव शिखादौ धार्यमाणेषु एषु कामेषु भक्तिप्रह्वतया अवतिष्ठमानोऽथवा कामश-

क्त्युदयस्थाने मेढ्रमूलदेशवर्तिनि शाक्ते आधारे स्थितः सावधानः साधको न केवलं तमेव नियतं क्षोभयेत् यावत् जगदपि,– इति कामपञ्चकारब्धमेतत् यन्त्रं स्यात् । अत्र च अयमुद्धारः–क्षस्य पूर्वगो ह, लस्य र, उकारस्य ई, अःकारस्य अं; एवं ह्रीं । अंकारस्य स्वपुरात् तृतीयस्थानवासी क, यस्य ल, आकारस्य ई; एवं क्लीं । उक्तं हि

'उपरं यत्परं बीजं रुद्रसंख्यानसंस्थितम् ।
पञ्चानामपि कामानां शिरोभूतं तु कारयेत् ॥'

इति । उकारात् रुद्रसंख्यानसंस्थितमेकादशं बीजं अं । अंकारस्य पूर्वं भूतसंख्याकं पञ्चमं ए, ऋकारस्य च परं तथैव भूतसंख्याकं ए, आभ्यामिति एकाराभ्याम् । अत एव उक्तं

'कन्दर्पमन्दिरं कुर्याद्द्विधाभूतं तु पार्वति ।'

इति । क्षस्य पूर्वं रसोत्थं षष्ठं वर्णं व, हस्य ल, एवं व्लं । हस्य पूर्वकस्थं स, थस्य त, लस्य र, उकारस्य ई; एवं स्त्रीं । एवं पञ्च कामाः । उक्तं च अत्र

'मायाख्यं कामराजस्थं कुलबीजेन वेष्टितम् ।
पुटीकृतं तु तेनैव षट्कोणाकारधारिणा ॥
तत्कोणस्थेन कामेन वेधयेत्तापनेषुणा ।
क्षिपेत्तत स्त्र्यर्णकामान्तः कुर्यादाद्येन कामितम् ॥
एवं पञ्चप्रकारार्णकाममन्त्रं तु साङ्कुशम् ।
ध्यायेद्वा धारयेद्वापि शक्तिस्थः क्षोभयेज्जगत् ॥'

इति । अत्र च इयान्विशेषः–यत् चतुर्थे कामे स्वरान्तरं बहिरङ्कुशबीजं चेति यदभिप्रायेणैव श्रीकल्याणवर्मणा कोणषट्कमध्ये ब्लूंकारं, तद्बहिः क्रोंकाराष्टकं दिगष्टके न्यसे-

चेति व्याख्यातम् । तदेवं वृद्धप्रपितामहसंभृतं तत्र तत्र तत्तदर्थावबोधनक्षमं संवादादि सर्वं परिकरजातं गोत्रजेभ्यो बलवच्छलतया यथाकथंचिदन्ततश्चौर्यादिना अपहृत्य गृहीत्वा अपि अत्र निरवद्यं शब्दार्थयोजनमात्रमपि कर्तुमजानता भवता कतरत्कौशलमवलम्ब्य केवलमत्रैव पटलेऽन्यत्र वा परोपपादितेषु विवरीत्रन्तरातिशायिष्वपि व्याख्याविशेषेषु 'प्रकाशितसंप्रदायसतत्त्वाः प्रतिभातिरेकशालिभिर्वयमुत्साहनीयाः' इत्यादि उक्तं 'धन्याय मह्यं नमः' इत्यादि च वक्ष्यते इति न जानीमः । यद्वा स्वच्छन्दाभिधायिनां यत्तदभिधाने किं नाम अवधिनिबन्धनम् । यदाहुः

'छिद्रानुसृतिशीलानां जडिमोद्गारदुःस्पृशाम् ।
नदीनामवधिः सिन्धुर्नीचवाचां न कश्चन ॥'

इति ॥ ४६ ॥

एवं कामराजमुपसंहृत्य शक्तिबीजसाधनमपि अभिधातुमाह

**शक्तिबीजस्वरूपां तु सृष्ट्या संहृतिसीमया ।**
**सृष्टिसंहारपर्यन्तं शरीरे परिचिन्तयेत् ॥ ४७ ॥**

इह खलु साधकः स्वशरीर एव समुच्चरच्छक्तिबीजाविभिन्नस्वरूपां मध्यशक्तिं संहृतिसीम्ना तदवधिकया द्वादशान्तादारभ्य सृष्ट्या सृष्टिक्रमेण हृदन्तं प्रसरन्तीं पुनरपि प्रत्यावृत्त्या सृष्टेस्तदुदयस्थानात्मनो हृदयात् संहारस्य द्वादशान्तस्यैव पर्यन्तमर्थादुल्लसन्तीं परितः समन्तात् पौनःपुन्येन एवं गमागमाभ्यां चिन्तयेदनुसंदध्यादित्यर्थः ॥४७॥

---

१ 'पां तु सृष्ट्वा संहरते यदा । सृष्टिसंहारपर्यन्तं' ग. पाठः ॥

एवं परिचिन्तनेन अस्य किं स्यादित्याह

यतो[1] भवति देवेशि वैनतेय इवापरः ।
नागानां दर्शनादेव जडीकरणकारकः ॥ ४८ ॥
दोहिनाममृतासारधीरधाराधरोपमः[2] ।
स्थिरकृत्रिमशङ्काख्य[3]विषोपविषनाशकः ॥ ४६ ॥

तथा

दुष्टव्याधिग्रहानेकडाकिनीरूपिकागणः ।
भूतप्रेतपिशाचौ[4]घैस्त्रिनेत्र इव दृश्यते ॥ ५० ॥

अत्र बीजत्रयसाधनग्रन्थे यदन्यैर्व्याख्यातं, तत् वचासि आरोप्यमाणमपि परं त्रपाकरं निरुपयोगि ग्रन्थविस्तराधायि चेत्यस्मभ्यं सचेतोभिर्नासूयितव्यं यत्किमिति न तदनूद्य दूषितमिति । तत्रापि पिण्डत्रयस्य

'इत्थं भेदेनेदं बीजत्रयसाधनं यदुदितमिह ।
पिण्डोद्धारः स्वरसप्रवृत्त उक्तोऽत्र देवेन ॥'

इत्युक्त्यभिप्रायानवधारणात् भ्रान्तैः केन तावत् शाब्देन व्यापारेण उद्धारः कृत इति न विद्मः । यद्वा येषां साक्षान्मन्त्रोद्धारमजानताम्

'अत्र हि स्वस्वरूपादिश्लोकयुग्मेन देवयोः ।
मनुरुक्तो व्याप्तिगर्भो गुरुरेव हि नोऽब्रवीत् ॥
स्वस्वरूपं स्वमार्गस्थं स्वसंवेद्यं स्वतेजसम् ।
स्वानन्दं स्वस्वशक्तिस्थमिति षड्भिर्विशेषणैः ॥
ऊकारादिक्षकारान्तं शाक्तो भागः कटाक्षितः ।
क्षकाराद्यावदूकारं शाक्तो भागोऽथवानयोः ॥
स्वप्रवाहां स्वमार्गस्थां स्वभावां स्वकुलोद्भवाम् ।

---

१ 'ततः' . । २ 'देहिनां' ग. । ३ 'दि' ग. । ४ 'चादिः' ग. पाठः ।

स्वानन्दां स्वपदारूढामिति षड्भिश्च सूचितः ॥
रेफतो नादपर्यन्तः शाक्तो भागोऽनयोर्यतः ।
नादतो रेफपर्यन्तं शैवो भागोऽथ सूचितः ॥'

इत्यादिना सृष्टिसंहारगत्या निर्निबन्धनं तदुद्धारं वदतां

'जिह्वाच्छेदभयं नास्ति न तालुपतनाद्भयम् ।
निर्विशङ्केन वक्तव्यं निर्लज्जः को न पण्डितः ॥'

इतिभङ्ग्या निर्विशङ्कमेव चेतस्तेषां स्वयम्भुवां किमुच्यते-ऽस्माभिर्यदुक्तमभियुक्तैस्तेषां भवतामेवमादावत्यन्तातीन्द्रियार्थदर्शनाय केन योगीश्वरेण दिव्यं चक्षुरर्पितमिति न जानीमः इति ॥ ५० ॥

इदानीमेकैकबीजसाधनप्रसङ्गापतितं प्रागुक्तवैलक्षण्येन समस्ताया अपि विद्यायाः साधनमभिधत्ते

अथवा येन विद्येयं परिपूर्णा विचिन्त्यते ।
नाभिमण्डलहृत्पद्ममुखमण्डलमध्यगा ॥ ५१ ॥
केवलैव महेशानि पद्मरागसमप्रभा ।
तस्याष्टगुणमैश्वर्यमचिरात्संप्रवर्तते ॥ ५२ ॥

एवं नामस्मरणजपध्यानमात्रादपि अस्या विशिष्टफलदायित्वमस्तीत्याह

मनसा संस्मरत्यस्या यदा नामापि साधकः ।
तदैव मातृचक्रस्य विदितो भवति प्रिये ॥ ५३ ॥
यदैव जपते विद्यां महात्रिपुरसुन्दरीम् ।
तदैव मातृचक्राज्ञा संक्रामत्यस्य विग्रहे ॥ ५४ ॥
सर्वासां सर्वसंस्थानां योगिनीनां भवेत्प्रियः ।
पुत्रवत्परमेशानि ध्यानादेव हि साधकः ॥ ५५ ॥

एवं केवलाया विद्याया माहात्म्यमभिधाय समुदिताया अपि आह

यदा तु परमेशानि परिपूर्णां प्रपूजयेत् ।
प्रयच्छन्ति तदैवास्य[1] खेचर्यः सिद्धिमुत्तमाम् ॥५६॥

ननु चेदस्याः सचक्रायाः पूजनं क्रियते, तत् खेचर्यः कस्मात् सिद्धिमुत्तमां ददतीत्याह

चतुष्षष्टिर्यतः कोट्यो योगिनीनां महौजसाम् ।
चक्रमेतत्समाश्रित्य संस्थिता वीरवन्दिते ॥ ५७ ॥

अत्रैव वैशिष्ट्यमभिदधत्फलविशेषमपि आह

आदेः[2] संबन्धिनि पदे मध्ये बीजाष्टकं बहिः ।
कला[3] ध्यात्वाङ्गनानङ्गे जायतेऽनङ्गवत्प्रिये[4] ॥ ५८ ॥

आदेर्वाग्भवस्य संबन्धिनि पदे स्थाने, मध्ये तत्स्थे कामराजेऽर्थात्कृते वाग्भवकामराजयोर्व्यत्यये सत्येवंविधा विद्या, तद्बहिर्वशिन्यादिवाचकं बीजाष्टकं, कलाः कामाकर्षिण्यादिवाचकं स्वरषोडशकं चेत्येतावन्मात्रं चक्रं कस्याश्चन साध्याया अङ्गनाया अनङ्गे मदनादिशब्दोक्तायां योनौ ध्यात्वा अनङ्ग इव सकलजगद्वशीकरणसमर्थः साधको जायते इत्यर्थः ॥ ५८ ॥

ननु मूलविद्यावत् विद्यान्तराणामपि किमिति न किञ्चित्साधनकर्म उक्तमित्याह

करशुद्ध्यादिविद्यानामेकैकं परमेश्वरि ।
रुद्रयामलतन्त्रे तु कर्म प्रोक्तं मया पुरा ॥५८॥

तर्हि अष्टमचक्रान्तर्निविष्टानां साधकानां का वार्तेत्याह

---

१ 'तदैवास्य खेचरीं' ग. । २ 'आदौ' ग. । ३ 'कलां ध्यात्वाङ्गनारङ्गे' ग. । ४ 'प्रियः' ग. पाठः ।

मादनैर्मदनो भूत्वा पाशाङ्कुशधनुःशरैः ।
क्षोभयेत्स्वर्गभूलोकपातालतलयोषितः ॥ ५९ ॥

एवं मादनानां योषिद्वशीकारित्वमुक्त्वा, शाक्तानामपि पुंवशीकारित्वमतिदिशति

तथैव शाक्तैर्देवेशि त्रिपुरीकृतविग्रहः ।
साधयेद्देव[1]गन्धर्वसिद्धविद्याधरानपि ॥ ६० ॥

'मदनो भूत्वा' इत्येतत्समस्कन्धतया उक्तं त्रिपुरीकृत-विग्रह इति । तथैवेति अनेन एषां मदनायुधोक्तपूजाप्रकारोऽतिदिष्ट इति कस्य शब्दस्य अयमर्थ आयुधसाजात्यादेव तत्सिद्धमिति किमनेनेति आस्ताम् ॥ ६० ॥

ननु एषां स्वरूपमेव किं येनापि तत्तद्वशीकारसिद्धिः स्यादित्याह

तत्र शाक्ता महावज्रप्रस्तार[2]जनिताः शराः ।

महावज्रप्रस्तारोऽत्र श्रीनित्याकालोक्तः, नतु चतुःशृङ्गो मेरुस्तस्य क्वचिदपि अनभिधानात् । नच अत्र

'एवमेतस्य चक्रस्य प्रभावो वर्णितुं मया ।
न शक्यते........... .................. ॥' (१ । ५६)

इति , तथा

'संस्थितात्र महाचक्रे................. ।' (१ । ५६)

इत्यादाविव महच्छब्दोपादानानुपादानाभ्यां कश्चित् विशेषः । उक्तं च अत्र

'भ्रत्रमध्यगतं बीजमूढमध्योपरिस्थितम् ।
पश्चिमस्थेन संभिन्नमूढमध्येन भेदितम् ॥
प्रथमं सायकं देवि शोषणं रक्तसन्निभम् ।

---

१ 'देव' ग. । २ 'प्रस्तारे' ग. पाठः ।

तदेव तत्त्वं सुभगे माद्यबिन्दुविभूषितम् ॥
पृषट्कं मोहनं नाम त्रैलोक्ये मोहकृत्परम् ।
घसमध्यगतं तत्त्वं षहमध्येन भेदितम् ॥
यान्तबिन्दुसमायुक्तं बाणं सन्दीपनं परम् ।
छजमध्यगतं बीजं शान्तबिन्दुविभूषितम् ॥
षहमध्योपरिस्थं तु चतुर्थं कथितं शरम् ।
तापनो नाम बाणोऽयं तापयेत् त्रिदशानपि ॥
नान्तं ह्राद्येन संभिन्नं सुस्वच्छं पञ्चमं प्रिये ।
उन्मादनो नाम शरस्त्रैलोक्योन्मादकारकः ॥'

इति । अयमत्र अर्थः–ऋञमध्यगतं द, ऊढमध्यगतं र, पश्चिमस्थं आ, ऊढमध्यं अं, एवं द्रां । तदेव द्रामित्येव तत्त्वं बीजं, किंतु इयान् विशेषः–माद्यं ईं, एवं द्रीं । घसमध्यगतं क, षहमध्यं ल, यान्तं इ, एवं क्लिं । छजमध्यगतं व, शान्तं उ, षहमध्यं ल, एवं ब्लुं । नान्तं स, ह्राद्यं अः, एवं सः । श्रीरसमहोदधिरपि

'अधमध्यं द्विधोद्धृत्य पषमध्येन लाञ्छितम् ।
औअःपृष्ठसमोपेतं कपूर्वेण शिरोयुतम् ॥
गाद्यं लान्तं च सोर्ध्वस्थौ अ–इ–अन्तसमन्वितौ ।
काद्ययुक्तौ ष–अन्तं च खाद्याङ्कं देवताशराः ॥'

इति । अधमध्यं द, पषमध्यं र, औ–पृष्ठः आ, अःपृष्ठः ई,–कपूर्वः अं, एवं द्रां, द्रीं । गाद्यः क, लान्तो व, सोर्ध्वं ल, अकारस्य अन्तः इ, इकारस्य अन्तः उ, काद्यः अं, एवं क्लिं ब्लुं । षान्तः स, खाद्यः अः, एवं सः । अत एव एषां मेरुमध्योद्धारोक्तो विशेषो न ग्राह्यस्तस्य तन्त्रान्तरीयत्वात् । एवंहि वज्रप्रस्तारजनिताया मूलविद्याया अपि

'वज्रप्रस्तारभेदेन या विद्या द्वादशाक्षरा ।

त्रिबीजरहिता सा स्यादादिमध्यान्त एवहि ॥'

इति उपक्रम्य

'एषासौ परमा विद्या निखिला सिद्धिदायिका ।
उत्पन्ना मेरुमध्यात्तु विद्या पञ्चदशाक्षरा ॥'

इत्याद्युक्तो विशेषः प्रसक्तः स्यात् । अस्तु चेन्न उद्धृत्य अधिकारिभेदेन उक्तत्वात्, अन्यथाहि आप्तत्वं खण्ड्येत परमेश्वरस्य, तदप्रामाण्ये किं निबन्धनं स्यात् । एवंच

'पञ्च बाणास्तु ये प्रोक्तास्तेषु भूताक्षराणि च ।
एकैकमादिमुद्धृत्य संपूर्णाश्च भवन्ति ते ॥
एकादशाद्यमुद्धृत्य भान्तान्तं तस्य चाग्रतः ।
रुद्रादियुक्तं संगृह्य झिण्टीश्वरसमन्वितम् ॥
नवके ऋतुकोष्ठस्य हकारं यस्य ऊर्ध्वतः ।
चतुर्थे तद्विजानीयात्साधुरुद्रालयं परम् ॥
नवके राममध्ये तु बिलमध्ये व्यवस्थितम् ।
आसनं देववर्णानां ककारादिस्थितान्भवेत् ? ॥
तृतीयेन विना देवि त्रिमूर्ति त्रीणि ? भेदिताः ।
सर्वे बिन्दुयुताः कार्याश्चतुरक्षर (ए) वहि ॥
पञ्चममादिदातव्यं ध–अन्ते बिन्दुसंयुतम् ।
बिन्दुमस्तकसंयोगात्पञ्चैते सिद्धिदायकाः ॥
एतानि पञ्च बीजानि पञ्चबाणेषु दीपकाः ।
अनेन रहिता देवि निष्फलास्तु भवन्ति ते ॥
आसनं पञ्च बाणास्तु मूलविद्यादिदूतयः ।
पूर्वोक्तं यन्मया देवि रुरुभेदे च मध्यतः ॥
बीजः प्रस्तारभेदेन उद्धृतोऽयं मया पुरा ।
अनेनैव विधानेन सफलास्तु भवन्ति ते ॥
निर्बीजा नैव सिध्यन्ति संप्रदायविवर्जिताः ।

सबीजास्तु समाख्याता निर्बीजा नैव पूजने ॥'

इतिसंवादेन वृथा आयस्तम् । अयं च अत्र उद्धारः–एकादशार्धं क, भान्तान्तं म, रुद्रादि द, झिण्ठीश प, तेन दे । ऋतुकोष्ठं षष्ठं, तत्स्थं व, एवं कमदेव । बिलमध्ये व्यवस्थितं ल, एतेन क्ल म्ल व्ल दले । त्रिमूर्ति । अथ

'सबीजैस्तैर्नियोक्तव्याः संप्रदायसमन्विताः ।'

इति श्रीरसमहोदधिसंवादबलादेवमुच्यते इति चेत्, अस्तु एवं, किंतु भवद्गृहादेव च्छद्मना निर्गतेऽस्मिन्ग्रन्थे न एतदेवं दृष्टं युष्मदीयैरेव कैश्चित् दुष्पाराद्दुर्लीयत्वेन प्रख्यापिते मन्त्रसंकेते च न स्पृष्टमिति सन्दिहामहे किमेतत् वस्तुसदवस्तुसद्वेति । तत्र वस्तुसत्त्वे न अस्माकमेष दोषो यत्कश्मीरेषु श्रीमान्विश्वावर्त एव अस्य दर्शनस्य साक्षात्प्रवर्तयितेति उक्तपूर्वं, तत्

'......................शिष्यधुङ्नारकी भवेत् ।'

इतिश्लोकपादार्थं विस्मृत्य एतद्बीजपञ्चकपरिहारेण किमिति उपदिष्टं, गुरुरेवहि यदि अन्यथा मन्त्रोपदेशं करोति, तत्कस्तच्छिष्याणामपराधः । श्रीरसमहोदधिश्लोकानां यदि अन्यथा प्रचारः कृतस्तद्यावदास्तां, तेन हि वस्त्वपलापमात्रं सिद्धं, न वस्तुनि काचित्क्षतिः । गुरुतः साक्षात्प्राप्तानां मन्त्राणां पुनरन्यथोपदेशे महान्प्रमादः । एवं 'भिषजोऽपि विषं प्रयुञ्जते चेत्सुवचा तर्हि निरातुरा धरित्री ।' इतिभङ्ग्या भवतामेवं दुश्चेष्टितमिति अलं पूर्वगुरुत्वेन अवस्थितानां प्राच्यानामपि दोषाविष्करणेन, वस्तुसंस्पर्शनपरतया प्रवृत्तेस्तु न अस्माकमुभयलोकदूषकः कश्चित् दोषः । यदाहुः

'दीक्षितानां न निन्दादि कुर्याद्विद्वेषपूर्वकम् ।
उपदेशाय नो दोषः स ह्यविद्वेषपूर्वकः ॥'

इति । अवस्तुसत्त्वे तु अस्मत्पक्ष एव ज्यायानिति अलं दुर्विनीतदमनेन ॥

एवं शाक्तानभिधाय मादनानपि आह

**मादनास्त्वादिपरतः सर्वाधःस्था[1] नियोजिताः ॥६१॥**

सर्वाधःस्थाः सर्वस्य अध्वनोऽधःस्थितानां चतुर्णां वाय्वादीनां भूतानां वाचका अन्तःस्था अर्थात् तेषामेव आदेराकाशस्य तद्वाचकस्य हकारस्य परतः पश्चात् नियोजिताः पुनर्मादनाः शरा भवन्तीति वाक्यार्थः, तेन हयरलवेति क्रमः ॥ ६१ ॥

तथा

**आद्यन्तगो महापाशः पौरुषेयः प्रकीर्तितः ।**
**रुद्रशक्तिः कुण्डलाख्या माया स्त्रीपाश उच्यते ॥६२॥**
**तुरीयमरुणावर्गाद्[2] द्वितीयमपि पार्वति ।**
**[3]स्त्रीपुंस्कोदण्डयुगलं कामाग्निव्यापकोऽङ्कुशः ॥६३॥**

आदेरवर्णस्य अन्तगः आ । कुण्डलाभ्यामिकाराभ्यामा समन्तात् ख्याता तद्द्वयसंघट्टादुदीयमाना चतुर्थस्वरात्मिका या रुद्रशक्तिः, सा इह माया, नतु चतुष्कला; स्त्रीपाश उच्यते इति अन्वयः । एवंच

'ईकार इवार्धयतो ? मायापि चतुष्कला स्त्रीणाम् ।'

इत्युक्तस्त्र्यक्षरपक्षः प्रतिक्षिप्तो भवति, नतु वृद्धप्रपितामहसंभूतानन्तविजयसद्बोधोपादानमात्रेण यदेवमपि पदत्रयो-

१ 'धस्तात्' ग. । २ 'वर्गे' ग. । ३ 'पुंस्त्रीकोदण्डयुगलं कामोऽग्निः' ग. पाठः ।

पादानानर्थक्यं समाहितं स्यात् । अरुणावर्गादिति तवर्गात् तुरीयं ध, द्वितीयं थ, कामः क, अग्नी र, व्यापकः ओ, एवं क्रों । कामाङ्कुशस्तु प्रथमपटल एव उक्तः, मन्त्रप्रकरणसामर्थ्यात्पुनरेषां सबिन्दुत्वमवसातव्यम् । उक्तं च

'ऊपूर्ववर्णयुगलं काद्येन शिरसान्वितम् ।
पाशद्वयं समाख्यातं शाक्तं मादनमेवच ॥
जम्भादिपदसंयुक्तमेकमङ्कुशमुद्धरेत् ।
द्वितीयं काद्ययोन्यन्तमंकारान्तलयान्तगम् ॥
णान्तं पाद्यं सकाद्यं च चापयुग्ममुदाहृतम् ।
षाद्यं राद्यं लयान्तं च वाद्यं लान्तसमन्वितम् ॥
औअः-मध्यगबीजेन सर्वेऽपि शिरसाहृताः ।
कामदेवस्य कथितं शरपञ्चकमुत्तमम् ॥'

इति । ऊपूर्ववर्णयुगलं ई आ, काद्य अं, एवं ईं आं । काद्य अं, योनेरेकारस्य अन्तः ओ, अंकारान्तः क, लययोरन्तगो र, एवं क्रों । णान्तो योन्यन्तरावस्थित्यपेक्षया थ, पाद्यो ध, काद्य अं, एवं थं धं । षाद्यो ह, राद्यो य, लययोरन्तः र, वाद्यो ल, लान्तो व, औअः-मध्यगतं बीजं अं, एवं हं यं रं लं वं ॥ ६३ ॥

ननु मुद्राणामेव पूर्वमुक्तं न पूजनं, तत्किमेता कुत्रचित्पूज्या न वा इत्याह

मुद्रा यास्त्रिपुरायास्तु देवि सिद्ध्यष्टकान्विताः ।
ता एव सर्वचक्रेषु पूजाकाले [1]प्रपूजयेत् ॥ ६४ ॥

सिद्ध्यष्टकेत्यनेन मुद्रादशकसाहचर्यात् रसमोक्षलक्षणद्वयमपि उपलक्ष्यते इति प्रागेव उक्तप्रायम् ॥ ६४ ॥

---

१ 'प्रदर्शयेत्' ग. पाठः ।

अस्याश्च एवमुक्तमाहात्म्यवत्त्वादेव अनन्यसामान्यत्वमस्तीत्याह

अतः प्रधानविद्येयं त्रिपुरा परमेश्वरी ।
नैतस्याः सदृशी काचिद्विद्या देवेशि विद्यते ॥६५॥

यतः

एतामेव पुराराध्य विद्यां त्रिपुरभैरवीम् ।
त्रैलोक्यमोहनं[1] रूपमकार्षीद्भगवान्हरिः ॥ ६६ ॥

तथा

कामदेवोऽपि देवेशि महात्रिपुरसुन्दरीम् ।
समाराध्याभवल्लोके सर्वसौभाग्यसुन्दरः ॥ ६७ ॥

तथा

मयापि यद्व्रतस्थेन क्रियतेऽद्यापि सुन्दरि ।
जप्यं त्रिसन्ध्यमेतस्यास्तदेतत्पदसिद्धये ॥६८॥

एतत्प्रसङ्गापतितं चक्रस्य अपि व्यस्तसमस्ततया पूजनेन फलभेदमाह

मध्यप्रपूजनाद्देवि जायते वाक्पतिर्नरः ।
तथैवापरकन्दर्पो बाह्यमध्यान्तरेऽर्चनात्[2] ॥६९॥
सर्वेण सर्वदा सर्वदेवीयुक्तेन पार्वति ।
साधयेत्खेचरीसिद्धिमणिमादिगुणान्विताम् ॥ ७० ॥

मध्यस्य मूलत्रिकोणस्य प्रकृष्टमष्टमचक्रनिविष्टेन देवीचतुष्टयेनैव, तदपेक्षया बाह्यस्य अष्टारस्य मध्यमध्यवर्तिनो नवमचक्रस्य अपि पूजनात् वाक्पतित्वं च कामत्वं च सिद्ध्येदिति द्विधा व्यस्तस्य चक्रस्य पूजनम् । समस्तस्य च पू-

१ 'त्रैलोक्यमोहनम्' ग. । २ 'न्तपूजनात्' ग. पाठः ।

जनादणिमादिसिद्ध्यष्टकान्विता खेचरत्वसिद्धिः स्यात् । निर्निबन्धनमष्टकत्रयमाश्रयतां पुनः कस्तावदभिप्राय इति कः कलयितुं समर्थ इति शिवम् ॥ ७० ॥

इति राजानकश्रीमज्जयरथविरचिते
श्रीवामकेश्वरीमतविवरणे चतुर्थः पटलः ॥ ४ ॥

अथ

## पञ्चमः पटलः ।

इह व्यस्तसमस्ताया विद्यायाः कथं जपहोमाभ्यां विना सिद्धिः स्यादिति पाटलिकं संबन्धमाक्षिपन्ती 'श्रीदेव्युवाच' किमित्याह

सर्वमेवं[1] त्वया प्रोक्तं त्रिपुराज्ञानमुत्तमम् ।
[2]कामतत्त्वं विषज्ञानं मोक्षतत्त्वं त्रयं तथा ॥ १ ॥
इदानीं जपहोमाभ्यां[3] विधानं वद शङ्कर ।
येनानुष्ठितमात्रेण मन्दभाग्योऽपि सिद्ध्यति ॥ २ ॥

त्रयमिति समस्तत्वेनेत्यर्थः ॥ २ ॥

अत्रैव प्रत्युत्तरयितुं 'श्रीभैरव उवाच' तदेव आह

१ 'सर्वमेतत्' ग. । २ 'कामतत्त्वविधिज्ञानं मोक्षतत्त्वपदावधि' ग. ।
३ 'होमानां' ग. पाठः ।

शृणु देवि प्रवक्ष्यामि त्रिपुरामन्त्रसाधनम् ।
जपहोमविधानं तु समीहितफलप्रदम् ॥ ३ ॥

तत्र जपविधानमेव तावदाह

चक्रमभ्यर्च्य विधिवत्सकलं परमेश्वरि ।
मध्यं वा केवलं देवि बाह्यमध्यगतं तु वा ॥ ४ ॥
तदग्रे संस्थितो मन्त्री सहस्रं यदि वा जपेत् ।
व्रतस्थः परमेशानि ततोऽनन्तफलं लभेत् ॥ ५ ॥

केवलं मध्यमिति मूलत्रिकोणरूपमेवेत्यर्थः । तत्र हि अष्टमनवमचक्राभ्यां मुख्य एव पूजनक्रमः, प्रधाने हि कृतो यत्नः फलवान्भवतीति किमन्येन अमुख्येन पूजनेनेति अभिप्रायः । बाह्यमध्यगतमिति बाह्येन वशिन्यादिदेवताष्टकात्मकान्तरङ्गपरिवाराधिकरणभूतेन सप्तासनचक्रेण युक्तं मध्यगतं त्र्यस्रमित्यर्थः, एवं साष्टारं त्र्यस्रमेव अभ्यर्चयेदिति आशयः । तदग्र इति तस्य त्रिभिर्विकल्पैः पूजितस्य चक्रस्य पुरस्तादित्यर्थः । यदीति हेतौ । वाग्रहणेन न्यूनाया अपि संख्यायाः स्वीकारः, तेन शतादि सहस्रं वा यतो जपेत् ततोऽनन्तफलं लभेदिति अन्वयः । जपस्य च अत्र साक्षादेव अङ्गित्वं स्थितमिति वृथा अन्यैराराटितमिति अलं भ्रंमन्यकुविकल्पविकल्पनेन ॥ ५ ॥

अत्रैव पक्षान्तरमाह

ध्यात्वा वा हृद्गतं चक्रं तत्रस्थां परमेश्वरीम् ।
पूर्वोक्तध्यानयोगेन संचिन्त्य जपमारभेत् ॥ ६ ॥

चक्रमिति त्रिप्रकारमपि ॥ ६ ॥

जपस्य च अत्र अनेकरूपेण आरम्भ इत्याह

निगदेनोपांशुना वा मानसेनापि सुव्रते ।

निगदेन शब्देनेत्यर्थः । यदुक्तं

'आत्मा न शृणुते यं तु मानसोऽसौ प्रकीर्तितः ।
आत्मना श्रूयते यस्तु तमुपांशुं विजानते ॥
परे शृण्वन्ति यं देवि सशब्दः स उदाहृतः ।

तच्च कथं कियत् किंफलमित्याह

पूर्वोक्तन्याससंनद्धो मुद्रासंनद्धविग्रहः ॥ ७ ॥
[1]मुक्ताहारमयीं स्फीतवैडूर्यमणिसंभवाम् ।
पुत्रजीवकपद्माक्षरुद्राक्षस्फटिकोद्भवाम् ॥ ८ ॥
प्रवालपद्मरागादिरक्तचन्दननिर्मिताम् ।
कुङ्कुमागुरुकर्पूरमृगनाभिवि[2]भूषिताम् ॥ ९ ॥
अक्षमालां समाहृत्य त्रिपुरीकृतविग्रहः ।
[3]लक्षमात्रं जपेद्देवि महापापैः प्रमुच्यते ॥ १० ॥

पूर्वोक्तन्याससंनद्धत्वादेव त्रिपुरीकृतविग्रह इति उक्तम् । आदिशब्देन शंखादेर्ग्रहणं, तेन नवैवेति न वाच्यम् । नच न्याय्यः पाठमात्रभेदात्

'वाक्तत्त्वसिद्धिप्राधान्ये मौक्तिकाः स्फटिकादिजाः ।
वैडूर्यपद्मरागादिनानारत्नसमुद्भवाः ॥
रक्तचन्दनजा वापि कामतत्त्वप्रसाधने ।
पुत्रजीवकपद्माक्षरुद्राक्षादिविनिर्मिताः ॥
निरञ्जनमहासिद्धिमुख्यत्वे········ ········· ।'

इति उक्तो विभागः, तथा

---

१ 'मुक्ताफलामलमणिस्फीतवैदूर्यसंभवाम्' ग. । २ 'विभाविताम्' ग. । ३ 'लक्षमेकं' ग. पाठः ।

'मुक्ताफलादिकन्त्रिकमेकत्र्यष्टारदेवतास्वादौ ।
अन्तेऽष्टास्थाष्टारगदेवीष्वपि पुत्रजीवाद्यम् ॥
स्फाटिकप्रवालपङ्कजरागाद्यं मध्यचक्रदेवीषु ।
कर्तव्यमक्षसूत्रं साधारं शोणचन्दनजम् ॥'

इत्युक्तो वा विभागोऽपि न न्याय्यः पाठमात्रभेदात् श्रौतत्वाभावात् ॥ १० ॥

इदानीं संख्यायाः फलस्य च यथायथमाधिक्यं दर्शयति

लक्षद्वयेन पापानि सप्तजन्मकृतान्यपि ।
नाशयेत् त्रिपुरा देवी साधकस्य न संशयः ॥११॥
जप्त्वा लक्षत्रयं मन्त्री [1]प्रयतो मन्त्रविग्रहः ।
पातकं नाशयेदाशु सप्तजन्मसहस्र[2]जम् ॥ १२ ॥
जप्त्वा विद्यां चतुर्लक्षं महावागीश्वरो भवेत् ।
पञ्चलक्षाच्चा[3]दरिद्रः साक्षाद्वैश्रवणायते ॥ १३ ॥
जप्त्वा षड्लक्षमेतस्या महाविद्याधरेश्वरः ।
जप्त्वैव सप्त लक्षाणि खेचरीमेल[4]कं व्रजेत् ॥ १४ ॥
अष्टलक्षप्रमाणं तु जप्त्वा विद्यां महेश्वरि ।
अणिमाद्यष्टसिद्धीशो जायते देवपूजितः ॥ १५ ॥
नवलक्षप्रमाणं तु जप्त्वा त्रिपुरसुन्दरीम् ।
विधिवज्जायते मन्त्री रुद्रमूर्तिरिवापरः ॥ १६ ॥

रुद्रमूर्तित्वमेव अस्य व्यञ्जयति

कर्ता हर्ता स्वयं गौरि लोकेऽप्रतिहतप्रभः ।

---

१ 'यन्त्रितः' ग. । २ 'स्रगम्' ग. । ३ 'दरिद्रोऽपि साक्षाद्वैश्रवणो भवेत्' ग. । ४'मेलको भवेत्' ग. पाठः ।

नित्यप्रमुदितो[1] वीरः स्वच्छन्दगतिरीश्वरः ॥ १७ ॥

भवतीति शेषः ॥ १७ ॥

ननु निगदादीनां त्रयाणां जपप्रकाराणां किमन्योन्यं कश्चिदस्ति विशेषो न वेत्याह

निगदेन यदाजप्तं[2] लक्षं चोपांशुना कृतम्[3] ।

मानसेन महेशानि कोटिर्जापफलं लभेत्[4] ॥ १८ ॥

इह निगदेन यदीषत् सकृत् द्विस्त्रिर्वा साधकेन जप्तं तत् कृतं तावन्मात्रमेव फलं लभेदित्यर्थः, यदुपांशुना अपि आजप्तं लक्षं कृतं निगदापेक्षया लक्षगुणं फलं स लभेत्, एवं मानसेन अपि आजप्तं कोटिगुणमिति उत्तरोत्तरमेषामस्ति उत्कर्षः इति तात्पर्यार्थः ॥ १८ ॥

देशभेदेन अपि जपस्य विशेषमाह

यत्र वा कुत्रचिद्देशे लिङ्गं वै पश्चिमामुखम् ।

स्वयंभु बाणलिङ्गं वा इतरद्वापि सुव्रते ॥ १९ ॥

तत्र स्थित्वा जपेल्लक्षं त्रिपुरीकृतविग्रहः ।

इतरदिति सिद्धादिप्रतिष्ठितमनेकप्रकारं

'पश्चिमाभिमुखं लिङ्गं योनिस्थं परिकीर्तितम् ।

हृद्ग्रन्थिबिन्दुसंस्थानं स्वयंभु बाणवाचकम् ॥

इतरच्चान्तरालस्थं.......................... ।'

इत्याद्यनेकप्रकारमनेकेषु आगमेषु अस्तीति सावधानैर्योगिभिः स्वयमेव यावदनुभवं यथारुचि तत एव अभ्यूह्यम् । व्याख्यातं च बहुशोऽन्यैर्यथाकथंचिदिति रोमन्थप्राये पुनरेतद्व्यावर्णने दुराग्रहे न अस्माकमभिनिवेश इति

---

१ 'प्रसन्नो मुदितो धीरः' ग. । २ 'तु यज्जप्तं' ग. । ३ 'समम' ग. । ४ 'जाप्यफलं भवेत्' ग. पाठः ।

आस्ताम् ॥

एवं किं स्यादित्याह

ततो भवति देवेशि त्रैलोक्यक्षोभको[1] नरः ॥ २० ॥

एवमेतदुपसंहरन् होमविधानमाह

एवं जपं यथाशक्ति कृत्वादौ साधकोत्तमः ।

होमं कुर्याद्दशांशेन.................... ।

केन कथमित्याह

....................कुसुमैर्ब्रह्मवृक्षजैः ॥ २१ ॥

कुसुम्भकुसुमैर्वापि त्रिमध्वक्तैर्यथाविधि ।

ब्रह्मवृक्षो याज्ञिकः पलाशादिः । त्रिमध्विति शर्करा घृतं पय इत्याद्यनेकप्रकारम्, स्वयंभुकुसुमैरितिपाठे वन्यैरिति अर्थः । यथाविधीति तत्र वक्ष्यमाणकुण्डाष्टकमध्यादेकं कुण्डं परदृष्ट्या अवलोक्य अस्त्रेण संप्रोक्ष्य उल्लिख्य संसेच्य संकुट्य उपलिप्य चतुष्पथमक्षवाटं च प्रकल्प्य वज्रीकृत्य तेजःपुञ्जमयैः कुशैरन्तर्बहिराच्छाद्य नैर्विघ्नयार्थं मेखलासु वामादिशक्तित्रयं न्यस्य अभ्यर्चयेत्, ततश्चतुष्पथान्तस्त्रिकोणमभिध्याय मायाबीजेन अम्बिकामाहूय आसनोपरि न्यस्य संपूज्य अग्निमानीय संप्रोक्ष्य अमृतीकृत्य संपूज्य शुक्रवत् ध्यात्वा सव्यापसव्यक्रमेण त्रिराभ्रम्य तद्योनौ प्रक्षिप्य तद्योनिमस्त्रेण संप्रोक्ष्य दर्भैराच्छाद्य अग्निं प्रज्वाल्य ज्वालामुद्रां प्रदर्श्य गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणानि अङ्गविद्यया एकैकाहुत्या कृत्वा स्ववामतः शिवशक्तितया दर्भोपरि अधोमुखौ स्थापितौ स्रुक्स्रुवावाज्यादिहोम्यद्रव्यजातं च अर्घपात्रविप्रुट्प्रोक्षणेनैव संस्कृत्य सं-

१ 'क्षोभकारकः' ग. पाठः ।

स्कारपूरणाय पूर्णां दत्त्वा अग्नेर्मातरं विसृज्य कामाग्नौ मन्त्रचक्रं संपूज्य समग्रमेव कुण्डं वह्निवक्त्रतया विभाव्य होमं कुर्यादिति समानासमानतन्त्रोक्तं विधिमनतिक्रम्येत्यर्थः ॥

एवंकृते किं स्यादित्याह

ततो भवति विद्येयं महाविघ्नौघघातकी[1] ॥ २२ ॥
सर्वकामप्रदा देवि भुक्तिमुक्तिफलप्रदा ।

कुत्रच एतत् कुर्यादित्याह

योनिकुण्डे भगाङ्के[2] वा वर्तुले वार्धचन्द्रके ॥ २३ ॥
नवत्रिकोणचक्रे[3] वा चतुरश्रेऽष्टपत्रके ।

भगाङ्क इति त्र्यश्रे । नवत्रिकोणचक्र इति समाहार द्वन्द्वः । अष्टपत्रक इति अष्टदले पद्मे ॥

ननु एकेनैव कुण्डेन होमसम्पत्तिरिति किमष्टानां निर्देशेनेत्याह

योनिकुण्डे भवेद्वाग्मी भगाङ्के[4] कृष्टिरुत्तमा ॥ २४ ॥
वर्तुले तु भवेल्लक्ष्मीरर्धचन्द्रे त्रयं लभेत्[5] ।
नवत्रिकोणकुण्डे तु खेचरत्वं प्रपद्यते[6] ॥ २५ ॥
चतुरश्रे भवेच्छान्तिर्लक्ष्मीः पुष्टिररोगता ।
पद्माङ्के[7] सर्वसंपत्तिरचिरादेव जायते ॥ २६ ॥
चक्रेऽष्टकोणे[8] सुभगे समीहितफलं लभेत्[9] ।

एवं होम्यद्रव्यभेदादपि फलभेदो भवेदित्याह

मल्लिकामालतीजातीपुष्पैराज्यैः[10] परिप्लुतैः ॥ २७ ॥

---

१ 'घातिका' ग. । २ 'भगाकारे' ग. । ३ 'कुण्डे वा' ग. पाठः । ४ 'भगे चाकृष्टिः' ग. । ५ 'भवेत्' ग. । ६ 'प्रजायते' ग. । ७ 'पद्माभे' ग. । ८ 'अष्टकोणे तु' ग. । ९ 'भवेत' ग. । १० 'मधु' ग. ।

हुतैर्भवति वागीशो मूकोऽपि परमेश्वरि ।
करवीरजपापुष्पाण्याज्ययुक्तानि पार्वति ॥ २८ ॥
हुत्वाकर्षयते मन्त्री [1]खभूपातालयोषितः ।
[2]चेन्द्रकस्तूरिकामिश्रं कृत्वा कुङ्कुममीश्वरि ॥ २९ ॥
हुत्वा कन्दर्पसौभाग्यात्स सौभाग्याधिको भवेत् ।
च[3]ण्पकं पाटलादीनि हुत्वा वै श्रियमाप्नुयात् ॥३०॥
श्रीखण्डमगुरुं वापि कर्पूरं पुरसंयुतम् ।
हुत्वा [4]पुरपुरन्ध्रीणां देवि विक्षोभको भवेत् ॥ ३१ ॥
हुत्वा पलं त्रिमध्वक्तं कृत्वा स्मृत्वा महेश्वरीम् ।
खेचरो जायते देवि गत्वा न[5]क्तं चतुष्पथे ॥ ३२ ॥
त[6]दा दधिमधुक्षीरमिश्रांल्लाजान्महेश्वरि ।
हुत्वा न बाध्यते रोगैः कालमृत्युभ[7]यादिभिः ॥३३॥

चतुष्पथे नक्तं गत्वा त्रिमध्वक्तं कृत्वा महेश्वरीं स्मृत्वा पलं हुत्वा खेचरो जायते इति अन्वयः । इह

'भावार्थः संप्रदायार्थो निगर्भार्थश्च कौलिकः ।
तथा सर्वरहस्यार्थो महातत्त्वार्थ एवच ॥
एवमेतन्महेशानि षड्विधं पारमेश्वरम् ।
व्याख्यानं सर्वतन्त्राणां पारम्पर्येण लभ्यते ॥' (यो० हृ० २।१५

इत्याद्युक्तं व्याख्यानं प्रतिपदं षोढा क्रियमाणं ग्रन्थवि-

---

१ 'स्वर्भू' ग. । २ 'चन्द्रं कस्तूरिकामिश्रं हुत्वा कुङ्कुममीश्वरि । ततः कन्दर्पसौभाग्योल्लाससामर्थ्यवान् भवेत्' ग. । ३ 'चम्पकं' ग. पाठः । ४ 'हुत्वामरपुरन्ध्रीणां देवि क्षोभकरो भवेत् । दासोऽपि लभते सद्यो लक्षाम्भोरुहहोमतः । दुर्भगः सुभगो भूयाल्लक्षकह्लारहोमतः' ग. ५ 'रात्रौ' ग. । ६ 'तथा' ग. । ७ 'यमादिभिः' ग. पाठः ।

स्तराधानमात्रफलमिदानीं तात्पर्यमात्रगत्या उच्यते । तथा हि भावार्थस्तावत् यत्र यादृक् विवक्षितमक्षरार्थमात्रम्, स एवच बाह्यत्वेऽपि आत्मज्ञानादिप्रतिपादनपरतया महाबोधरूपः शिववाक्याविसंवादितामादधानो गुर्वाद्यनवगीतः संप्रदायार्थ इति उच्यते यथा 'आत्मा ज्ञातव्यो मन्तव्यः' इति 'सकृद्विभातोऽयमात्मा' इति च । इदं च द्विविधमपि व्याख्यानं वर्णाद्यात्माणवोपायरूपं, कथं नाम च अत्र सकृद्विभातत्वादेव सातत्येन अवभासमानशिवैकरूपस्य आत्मनो ज्ञात्रेकरूपत्वात् ज्ञातव्योऽयमित्यादिज्ञेयोचित इदन्तापरामर्शो भवितुमर्हतीति स एव

'स्वातन्त्र्यामुक्तमात्मानं स्वातन्त्र्यादद्वयात्मनः ।
प्रभुरीशादिसंकल्पैर्निर्माय व्यवहारयेत् ॥' ( ई०प्र०१।१।४७ )

इत्यादिरीत्या प्रमात्रेकरूपतामपरित्यजन्नपि स्वात्मनि प्रमेयतामवभासयति येन एवं [१]'परामृश्यतामुद्घोढुमुत्सहते इति भाव्यतामवलम्बमानः शिवोऽयमिति गुर्वादिभेदविभिन्नस्य शुद्धात्मनो गोचरतामियादिति आन्तरतया निगर्भशब्दव्यपदिष्टोऽयं तृतीयः प्रकारः । एवम्

'आत्मैव सर्वभावेषु स्फुरन्निर्वृतचिद्वपुः ।
अनिरुद्धेच्छाप्रसरः प्रसरदृदृक्क्रियः शिवः ॥' ( प्र०४।१।१ )

इति , तथा

'स्वात्मैव सर्वजन्तूनामेक एव महेश्वरः ।
विश्वरूपोऽहमिदमित्यखण्डामर्शबृंहितः ॥' (४।१।१)

इत्यादिश्रीमत्पूर्वगुर्वादिष्टदृष्ट्या एवंविध आत्मा सर्वासु परिमितात्मसंवेदनरूपासु अपि दशासु पराहंपरामर्शमयपरप्रकाशात्मकसंवित्तिमात्ररूपतया परामृश्यमानः प्रयत्नं

---

१ 'परामृशतां' ख. पाठः ।

विना अपि शिव एव परं सहजमैश्वर्यमासादयेदिति अयं

'कुलमात्मस्वरूपं तु…………………… ।'

इति आत्मरूपे कुले भावात् कौलिकशब्दव्यपदेश्यश्चतुर्थः इति । एतदपि प्रकारद्वयं विकल्पसंस्क्रियारूपतया शाक्तोपायात्मकम् । एवमपि अत्रैव यथायथं परप्रकर्षधाराधिरोहात्

'ततः स्फुटतमोदारताद्रूप्यपरिबृंहिता ।
संविदभ्येति विमलामविकल्पस्वरूपताम् ॥' (तं० ४।६)

इत्यादिदृशा सद्य एव आत्मसाक्षात्कारलक्षणमविकल्पात्मकं प्रत्ययं यायादिति अज्ञजनासंवेद्यत्वात् रहस्यशब्दाभिहितः शाम्भवोपायात्मा पञ्चमः । एवमियतोऽपि भावनाबलात् परां काष्ठामधितिष्ठतः सति अपि पिण्डे सदसदादिसकलकलनाकलङ्कोन्मुक्तसंविन्मात्रमयीं सिद्धिमासादयतः पुरःस्फुरद्रूपमपि भावमण्डलं

'तेषामिदं समाभाति सर्वतो भावमण्डलम् ।
पुरःस्थमेव संवित्तिभैरवाग्निविलापितम् ॥' (तं० २।३५)

इत्याद्युक्तस्वरूपपरमात्ममयतामास्थितं सर्वत एव अनन्यापेक्षमवभासते इति व्याख्यातायाः स्थितेरुपरिवर्तित्वादन्यातिशायितया च महापरमतत्त्वार्थशब्दपरामृष्टः षष्ठ इति । यदागमः

'अक्षरार्थो हि भावार्थः केवलः परमेश्वरि । (या०हृ०२।१६)
संप्रदायो महाबोधरूपो गुरुमुखास्थितः ॥
निगर्भोऽपि महादेवि शिवगुर्वात्मगोचरः ।
कौलिकः स्वात्मसंवित्तिरात्मसंवित्तिपूर्वकः ॥
रहस्यार्थो महागुप्तः सद्यःप्रत्ययकारकः ।
महापरमतत्त्वार्थः परमात्मपदास्थितः ॥

शिवगुर्वात्मसंवादरूपेणार्थावभासकः ।
निरस्तसर्वसंकल्पविकल्पस्थितिपूर्वकः ॥
विद्यापीठनिबद्धेषु संस्थितः पिण्डसिद्धिदः ।'

इति । एषां च प्रायशः सर्वत्र एवमसम्भवेऽपि

'एक एवहि भावार्थो बाह्यशास्त्रेषु लभ्यते ।
शब्दालङ्कारसारोक्तिसंस्काररचनात्मकः ॥
भावार्थः संप्रदायश्च द्विकशास्त्रेषु विद्यते ।
शिवबाह्यार्थसंवादे महागुरुमुखस्थितः ॥
भावार्थः संप्रदायार्थौ निगर्भार्थक्रमान्वितः ।
व्याख्यानं त्रिविधं देवि त्रिकशास्त्रेषु लभ्यते ॥
भावार्थः संप्रदायार्थौ निगर्भार्थश्च कौलिकः ।
तथा सर्वरहस्यार्थस्तन्त्राणां पञ्चरूपिणाम् ॥
भावार्थः संप्रदायोऽर्थौ निगर्भार्थश्च कौलिकः ।
तथा सर्वरहस्यार्थो महातत्त्वार्थ एवच ॥
महाज्ञानार्णवे दृष्टं षङ्कं तन्त्रेऽत्र पार्वति ।'

इत्यादिना प्राधान्याभिप्रायेण तत्र तत्र नैयत्येन अवस्थानमुक्तमिति अलमनुन्मीलितमार्गोन्मीलनचापलेन । तदेवमेतत् यथासम्भवं तत्र तत्र स्वयमेव अभ्यूह्यम् । यत् पुनरन्यैस्तप्तसलवणकलाजन्यायेन तत्र भावार्थसंप्रदायार्थनिगर्भार्थाः सान्तानिकेभ्यः प्रदर्श्यन्ते, तेषु च भावार्थे प्राच्या अस्मत्समानकालीनाश्च बहवो विस्तरतः कृतश्रमा इति अयं समुचितप्रक्रियान्तरमात्रदिशा लेशेन प्रकाश्यते इत्युद्देशाननुगुणं प्रतिज्ञाय कौलिकार्थरहस्यार्थतत्त्वार्थास्तु सामरस्यमयस्वात्मसंवित्तिनिबन्धनतया सद्यःप्रत्ययकारकतया विकल्पविलयाधायित्वेन च भगवता प्रतिपादिता इत्यंशेन शब्दैरेव शब्दान् व्याख्याय च महाप्रभुभिः केषां-

चिदपश्चिमजन्मनां मुखपरम्परयैव रहसि प्रकाशनीया इति कस्तत्र लिपिनिवेशमहाप्रत्यवाये प्रवर्तते इति कश्चिदन्तरान्तरा निर्निबन्धनमेतन्नाममात्रं च अभिहितं, तत् सर्वमनवबोधप्रच्छादनपरं गुरुधुरन्धरस्य भाङ्कारमात्रमेवेति उपरम्यत इति शिवम् ॥ ३२ ॥



इति श्रीराजानकश्रीमज्जयरथविरचिते
श्रीवामकेश्वरीमतविवरणे पञ्चमः पटलः ॥ ५ ॥



उच्चित्योच्चित्य नियतं कुतश्चन कुतश्चन ।
यथागुरुमुखं कैश्चिदेतद्व्याकृतमल्पकम् ॥ १ ॥

सर्वतःकष्टदुःश्लिष्टम्लिष्टशब्दार्थवर्त्मना ।
केन तावन्निमित्तेन कैरप्येतद्विवेचितम् ॥ २ ॥

पितृपितामहकल्पितकल्पना-
रसमहोदधिमात्रकदाशया ।
विवृतमप्यपरैर्न यथार्थतां
श्रुतबहिष्कृतबुद्धितया गतम् ॥ ३ ॥

अतः

श्रीमद्गुरुवरादेवमवधार्य यथार्थतः ।

मया जयरथेनैवं किंचिदेतत्प्रपञ्चितम् ॥
तत्तणस्यावधातव्यमत्र सद्भिरवज्ञया ।
अविचार्यैव वक्तव्यो न दोषो न गुणः पुनः ॥ ४ ॥



इति राजानकश्रीमज्जयरथविरचितं
श्रीवामकेश्वरीमतविवरणं संपूर्णम् ॥

